# ऋतुविलासः

रामनारायण त्रिपाठी





अखिल भारतीय संस्कृत-परिषद् , लखनऊ

# ऋतुविलासः



पं० रामनारायण त्रिपाठी
अध्यक्ष, प्राच्य संस्कृत विभाग, लखनऊ विश्वविद्यालय

अखिल भारतीय संस्कृत-परिषद्, लखनऊ

# प्रकाशक की ओर से

अखिल भारतीय संस्कृत-परिषद्, लखनऊ की प्रकाशन योजनायें बहुविध हैं। परिषद् में सुरक्षित हस्तलिखित ग्रन्थों तथा संस्कृत और भारती विद्या से सम्बद्ध उत्कृष्ट रचनाओं के अतिरिक्त वर्तमान कवियों तथा नाटककारों की मौलिक रचनाओं का प्रकाशन भी परिषद् का मुख्य उद्देश्य है। इसी उद्देश्य की पूर्ति के लिए 'कृतार्थकौशिकम्', 'शर्मण्यदेशः सुतरां विभाति' तथा 'सुधाभोजनम्' का प्रकाशन पहले ही किया जा चुका है। इसी परम्परा में 'ऋतुविलासः' को सुधी समाज के समक्ष प्रस्तुत करते हुए हमें अत्यन्त हर्ष का अनुभव हो रहा है। काव्य के सम्बन्ध में कुछ कहने की आवश्यकता नहीं है, क्योंकि इसके रचयिता आचार्य पं० रामनारायण त्रिपाठी जी में जहां एक ओर संस्कृत का प्रौढ़ पाण्डित्य है वहीं वह प्रतिभा-सम्पन्न कवि भी हैं। ऋतु-विषयक उनकी यह रचना विषयवस्तु की दृष्टि से प्राचीन होती हुई भी शैली की नवीनता के कारण अप्रतिम है। विद्वद्वर प्रो० को० अ० सुब्रह्मण्य अय्यर के 'प्रास्ताविकम्' से ग्रन्थ का गौरव और भी बढ़ गया है।

आशा है सहृदय समाज में 'ऋतुविलासः' को समुचित समादर प्राप्त होगा।

इस ग्रन्थ के आवरण पृष्ठ की रूपरेखा लखनऊ विश्वविद्यालय के ललितकला संकाय के प्रो० योगी द्वारा तय्यार की गयी है। इसके लिए परिषद् योगी जी की आभारी है।

मन्त्री

# विषयानुक्रमणिका

# प्रास्ताविकम्

आचार्यरामनारायणत्रिपाठिमहाभागैर्विरचित ऋतुविलासो मया दृष्टः। संस्कृतकाव्यपरम्परायामृतुवर्णनमिति प्राचीनतमेषु विषयेष्वन्यतमः । न केवलं काव्येषु वेदेष्वपि ऋतूनां चर्चा कृता दृश्यते। यद् ऋत्वधीनं बहुधा वैदिक-कर्मानुष्ठानम् । आयुर्वेदादिशास्त्रेष्वपि वसन्तादिसमुल्लेखो भवतीति स्वाभा-विकमेतत् । यतस्तत्तदौषधसेवनमपि वसन्तादिकालमनुसृत्य कर्तव्यं भवति। बहुभिः प्राचीनकविभिः षड्ऋतुवर्णनं चर्तुविशेषवर्णनं वा स्वकृतिषु कृतमुपलभ्यते। एतेषां प्राचीनकविकृतवर्णनानां सूची स्वकीये किञ्चिन्निवेदने कविना स्वयं दत्ता दृश्यत इति महतीयं सुविधा पाठकानाम् । प्रायेण कविभिस्तत्तदृतुषु दृश्यमानानां सस्यानां कुसुमानां पशुपक्षिणां च वर्णनं स्वकृतिषु क्रियते। यथा वाल्मीकिरामायणे लक्ष्मणसहितो रामः पम्पासरो गत्वा वसन्तर्तुशोभितां तामित्थं वर्णयति ।

"शोकार्तस्यापि मे पम्पा शोभते चित्रकाननाम् ।
व्यवकीर्णा बहुविधैः पुष्पैः शीतोदका शिवा । वा. रा. कि. १.६

नलिनैरपि संछन्ना ह्यत्यर्थशुभदर्शना ।
सर्पव्यालानुचरिता मृगद्विजसमाकुला । वा. रा. कि. १.७

अधिकं प्रतिभात्येतन्नीलपीतं तुशाद्वलम् ।
द्रुमाणां विविधैः पुष्पैः परिस्तोमैरिवार्पितम् ॥ वा. रा. वि. १.८

एवं वसन्तवर्णनमिदं प्रकृतिवर्णने पर्यवसितं यद्यपि प्रकृत ऋतुविलासे कवेः प्रकृतेः सर्वाङ्गीणवर्णने नाभिसन्धिः तथापि सा कथा बाढमुपेक्षितेति न भ्रमितव्यम् । यतः पठ्यतामिदं श्लोकत्रयम्—

सरति शीतलमन्दसमीरणो
न परिचीयत आतपवेदना ।
अपगता जडता हिमपातजा
सुखमयो हि वसन्तसमागमः ।। वसन्त०,४

विकसितः परितः सुमनोऽटवी
मुखरिता भ्रमति भ्रमरावली ।
विकचिता सहकारसुमञ्जरी
पिहितपीतपटा च लताढकी ।। वसन्त०,५

कुसुमिताः सितसर्षपनालिकाः
कृषकमानसमोदसमेधिकाः ।
कुसुमचित्रविचित्रसुपङ्क्तिभि-
र्हरिति भान्ति महाकृषिवाटिकाः ।। वसन्त०,८

इत्यादीनि प्राचीनकाव्यपरम्परासुगन्धवासितानि बहूनि स्थलानि समुपलभ्यन्ते प्रकृतर्तुवलासे । प्रकृते काव्ये यत् कृतं तत् कविना स्वयमेवेत्थमुक्तम् किञ्चिन्निवेदने (पृ. ८) "अस्मिन् ऋतुवर्णने समयानुकूलकृषिकुसुमफलानां ग्रामीणवस्तूनां प्रायेण विस्तरेण वर्णनं वर्तते" । शिशिरवर्णनस्यान्तिमे श्लोके तथ्यमिदं पुनः स्पष्टं निर्दिष्टम्—

ऋतूनां वर्णनं चारु ग्राममाहात्म्यमण्डितम् ।
रामनारायणेनेदं कृतं प्राज्ञमुदे बुधा ।। शिशिर०,६२

प्राचीनपरम्परागतस्य गन्धस्यैतदपरमुदाहरणं यत् कविना वसन्तविषये भगवदुक्तिः पाठकैः स्मारिता । तद्यथा—

ऋतुपतेर्महिमानमहं कथं
निगदितुं प्रभवामि वचः परम् ।
वदति पार्थममुं जगदीश्वरो
यदुपतिर्निजरूपमनामयम् ।। वसन्त०,७६

ऋतुषु मोदकरः कुसुमाकरो
निभृतमेव सखे स्वयमस्म्यहम् ।।

गिरिधरेण कथेयमुदीरिता
किमपि तत्र वचो न हि शिष्यते ।। वसन्त०,७७

ग्राममाहात्म्यमण्डितमृतुवर्णनं यत् प्रतिज्ञातं कविना तत् सुष्ठु निर्वाहितम्। पठ्यतामिदं श्लोकद्वयम्—

प्रथमपश्चिमधान्यकृपिद्वये
श्रमरताः कृषकाः शरदागमे ।
लवनमेकत आपतितं कृपेर्
अपरतो वपनं समुपस्थितम् ।। शरद्०,१५

क्व च कुविन्दगणो वयते पटान्
क्व च कुलालगणो कुरुते घटान् ।
क्व च कृषीवलसंघ इतस्ततो
वयति कर्षति कृन्तति सिञ्चति ।। शरद्०,५५

प्राचीनगन्धातिरिक्तनवीनयुगानुगुणसमत्वभावचर्चापि दृश्यते प्रकृतकाव्ये । तद्यथा--

द्विजजनोऽपि मिलत्यधुना समैः
स्वपचकोलकिरातकुविन्दकैः ।
सह मनागपि नो कुरुते घृणाम्
विषमतापगता समताऽऽगता ।। वसन्त०,७४

प्रकृते काव्ये तत्र तत्र विप्रकीर्णानि लौकिकव्यवहारनिष्कर्षभूतानि कानिचित् सुभाषितान्यपि समुपलभ्यन्ते तद्यथा—

अचिरलब्धधनाढ्य इवोद्धतः
तपति तीक्ष्णतरं तपनो दिने । शरद्०,४४

कृपिपु सेचनकर्मणि कर्षका
अधिदिनं निशि सायमुषः क्षणे ।
विनिरता गणयन्ति न शीतजां
रुजमहोऽस्ति रुजा क्व च कर्मिणाम् ।।

उपवनं सुरभीक्रियतेऽधुना
सुमितकेतकचम्पकजातिभिः ।
उपकृतौ निरतः स्वसमृद्धिभिः
जगति केचन सन्त्यपि दुर्दिने ॥ वर्षा०,२४

जगति मित्रसमृद्धिमवेक्ष्य के
न हि मिषन्ति विहाय मुनीश्वरान् । शरद्०,७१

भ्रमरता दधते न हि मन्दतां
सफलतातिवशात् क्वचनाल्पशः ॥ शरद्०,७२

अन्ततः

सुखानिलोऽयं सौमित्रे कालः प्रचुरमन्मथः । (वा. रा. कि. १.१०)

इति वाल्मीकिरामायणोक्तदिशा प्रकृतलघुकाव्येऽपि तत्र तत्र वसन्तस्य तृतीयपुरुषार्थानुकूल्यमधिकृत्य सरसानि वस्तूनि वर्णितानि सन्ति यथा—

नयति मोदकतां कुसुमाकरः
क्षिपति तां च दिशं विदिशं प्रति ।
मुनिजनोऽपि यदीयवशंवदो
भवति का नु कथा गृहमेधिनाम् ॥ वसन्त०,२०

स्वयमहो मदनो विमदोऽतनुस्
तनुधरेषु मदं तनुतेतराम् ।
बलमिदं कुसुमाकर ! ते परं
न तु कथं क्रमते तनुधारिणः ॥ वसन्त०,३९

मनसिजः कुसमाकर ! ते बलाद्
धनुषि रोपयितुं निखिलान् शरान् ।
प्रभवति प्रणिपातयितुं प्रियान्
प्रियतमा प्रियपङ्कजपादयोः ॥ वसन्त०,४३

पूर्वोक्तैः स्वल्पैः शब्दैः स्पष्टमिदं यत् प्रकृतं लघुकाव्यमृतुवर्णनविषये प्राचीनपरम्परानुसारि नवीनयुगानुगुणभावाभिव्यञ्जकं चेति । भारतेऽस्मिन्

षड्ऋतुविषयकाणि काव्यानि संस्कृतभाषयेव प्रादेशिकभाषाभिरपि प्रतिवर्षं सहस्रशो लिख्यन्ते प्रकाश्यन्ते च । अतः प्रकृते लघुकाव्ये विषयस्य नवीनत्वेऽसत्यपि कविव्यक्तित्वकृतं वैशिष्ट्यं प्रचुरया मात्रया विद्यत एवेति रसिकानां सर्वेषामुपादेयमनुकरणीयं चेत्युक्त्वा विरमामि ।

हिन्द्स्का
८, मेजर बैंक्स रोड
लक्ष्मणपुरम्
२१-६-७९

को. अ. सुब्रह्मण्य अय्यर

# किञ्चिन्निवेदनम्

ऋतुर्नाम कालः, कालश्च यद्यपि आदिमध्यान्तहीनोऽखण्डः स्वयम्भूः सर्वजन्यजनकः सर्वव्याप्तः सर्वत्र सदा संयुक्तः सर्वपालकः संहारकस्तथापि तस्याखण्डस्य आदित्यो गतिविशेषेण निमेषकाष्ठाकलामुहूर्ताहोरात्रपक्षमासर्त्वयनसंवत्सरयुगकल्पविभागं करोति। तत्र संवत्सराङ्गमृतुः । 'इह खलु संवत्सरं षडङ्गमृतुविभागेन विद्यात्' (वाग्० सू० ६ अ०)। ऋतुश्च ऋधातोः (अर्तेश्च १।७२) इत्यौणादिके तु प्रत्यये कित्वे च इयर्ति गच्छति असाधारणं लिङ्गमिति निरुक्त्या वसन्तादिकालविशेषस्य वाचकः। स च षड्विधः शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्तभेदात् त्रिविधश्च शीतग्रीष्मवर्षाभेदात्, द्विविधोऽपि शीतग्रीष्मभेदात्। कार्तिकादिषण्मासाः शीतः वैशाखादिषण्मासा ग्रीष्मः।

ऋतूनां विचारो भारतवर्षे मासराशिस्वरूपानुसारमाचार्यः कृतः "मासराशिस्वरूपाख्यमृतोर्यल्लक्षणत्रयम्" इति (अं० सं० सू० ४)। अतोऽत्र त्रिविधो भात्यृतुः—मासात्मकः, राश्यात्मकः, स्वरूपात्मकश्च तत्राद्यो मासात्मक ऋतुर्मासद्वयात्मकः "द्वौ द्वौ मार्गादिमासौ स्यादृतुः" (अ० को० १।४।१३) अन्यत्रापि—"मासद्वयात्मकः कालः ऋतुः प्रोक्तो विचक्षणैः" इति । एवं राश्यात्मकोऽपि राशिद्वयात्मकः। अत्र मासपदेन चान्द्रः सावनो वा मासो गृह्यते, राशिपदेन च सौरो मास उपादीयते। मासात्मक ऋतुः षड्विधः 'षड् वा ऋतवः' (तै० ब्रा० १।७।१०।२।) षड् ऋतुः संवत्सरः (शां० ब्रा० १४।१)। यत्र तु "**द्वादश मासाः पञ्चर्तवः**, (ऐ० ब्रा० १।१) 'पञ्च ऋतवः' (श० ब्रा० १।५।३।१। इति श्रुतं तत्र हेमन्तशिशिरयोरेकत्वं विवक्षितम् । एतत्तु श्रुतिः स्वयमाह—सप्तदशो वै प्रजापतिर्द्वादशमासाः पञ्चर्तवो हेमन्तशिशिरयोः समाने तावान् संवत्सरः संवत्सरः प्रजापतिः (ऐ० ब्रा० १।१) तत्र सायणश्च "यद्यपि षड्वा ऋतव" इति श्रुत्यन्तराल्लोकप्रसिद्धेश्च वसन्ताद्याः षट्सङ्ख्याकास्तथापि

शीतत्वसाम्येन हेमन्तशिशिरावेकीकृत्य पञ्चसङ्ख्योच्यते" इति । ऋतूनां षड्विधत्वमेव प्रायः सर्वत्रोपलभ्यते–

"चयकोपसमा यस्मिन् दोषाणां सम्भवन्ति हि ।
ऋतुषट्कं तदाख्यातं रवेः राशिषु सङ्क्रमात्" ।।

इत्यादि । तेषां षण्णामृतूनां विभागः–माघफाल्गुनौ मकरकुम्भौ वा शिशिरः, चैत्रवैशाखौ मीनमेषौ वा वसन्तः, ज्येष्ठाऽऽषाढौ वृषमिथुने वा ग्रीष्मः, श्रावणभाद्रपदौ कर्कसिंहौ वा वर्षाः, आश्विनकार्तिकौ कन्यातुले वा शरद्, मार्गपौषौ वृश्चिकधनुषी वा हेमन्तः । उक्तञ्च–

शिशिरः पुष्पसमयो ग्रीष्मो वर्षाशरद्धिमाः ।
माघादिमासयुग्मैः स्युर्ऋतवः षट्क्रमादमी ।। भा० प्र० १।१
राशिपरत्वेन क्वचन वैलक्षण्यमपि दृश्यते—
ग्रीष्मो मेषवृषौ प्रोक्तः प्रावृड्मिथुनकर्कटौ ।।
सिंहकन्ये स्मृता वर्षा तुलावृश्चिकयोः शरत् ।
धनुर्ग्राहौ च हेमन्तो वसन्तः कुम्भमीनयोः ।।

एषु षट्सु ऋतुषु कस्य प्राथम्यं कश्च कस्य नियतः काल इत्यत्र मतभेदः । केचन शिशिरमारभ्य षण्णां गणनां माघादिमासतः कुर्वन्ति । यथा—

"मासैर्द्विसङ्ख्यैर्माघाद्यैः क्रमात् षड् ऋतवः स्मृताः ।
शिशिरोऽथ वसन्तश्च ग्रीष्मो वर्षा शराद्धिमाः ।। भा० प्र० १।१, अ० हृ० सू० ३।१

सुश्रुते च,

तत्र माघादयो द्वादश मासाः, द्विमासिकमृतुं कृत्वा षड् ऋतवो भवन्ति, ते शिशिरवसन्तग्रीष्मवर्षाशरद्धिमाः इति (सु० सं० ६।६)

केचन वर्षर्तुमारभ्य गणयन्ति तथा भाद्रपदाद् वर्षाकालस्य प्रारम्भ इति मन्यन्ते । यथा—

"इह तु वर्षाशरद्धेमन्तवसन्तग्रीष्मप्रावृषः षड् ऋतवो भवन्ति·········ते तु भाद्रपदाद्येन द्विमासिकेन व्याख्याताः, इति (सु० सू० ६।१०)

तथा च—

वर्षा शरच्च हेमन्तः शिशिरश्च वसन्तकः इत्यादि (हा० १।४ अ०) । एते पूर्वोक्तसुश्रुतानुयायिनः षट्सु शिशिरं न स्वीकुर्वन्ति अपितु वर्षातिरिक्तप्रावृषा

षट्त्वपूर्तिं कुर्वन्ति । चरके विमानस्थानेऽपि एषैव पद्धतिः स्वीकृता, तत्रापि शिशिरस्य न गणना अपितु प्रावृष एव ।

एषु षट्सु प्रायो वसन्तस्य सर्वत्र प्राधान्य प्राथम्यञ्च दृश्यते यथा—

वसन्तो ग्रीष्मो वर्षाः । ते देवा ऋतवः शरद्धेमन्तः शिशिरस्ते पितरः…… (श० ब्रा० २।१।३।१)

मधुश्च माधवश्च वासन्तिकावृत्……(कृ० य० वे० ४।४।१२) मुखं वा एतद् ऋतूनां वसन्तः, इति च ।

संवत्सरोपक्रमरूपत्वेन वसन्तस्य प्राथम्यमुचितमेव । तत्र वसन्तस्य प्रारम्भश्चैत्रादेवेति स्वीकुर्वन्ति प्रायः सर्वे, किन्तु केचन फाल्गुनादेव तस्य समयमङ्गीकुर्वन्ति । तदित्थं ज्ञेयम्—सुश्रुते "इह तु वर्षाशरद्धेमन्तवसन्तग्रीष्मप्रावृषः षड् ऋतवो भवन्ति ते तु भाद्रपदाद्येन द्विमासिकेन व्याख्याताः" इत्युक्तम् । अत्र भाद्रपदमारभ्य वर्षाद्यृतूनां प्रवृत्तौ फाल्गुनमासो वसन्ते समायाति । अपरं किञ्चिदग्रे वक्ष्ये । केचन ग्रीष्मस्यैव प्राथम्यं प्राधान्यं च वाञ्छन्ति । तमेव च वर्षस्य प्रारम्भकालमपि मन्यन्ते । यथा—"ग्रीष्मो मेषवृषौ प्रोक्तः…… इत्यादि । महाकविनाऽपि ऋतुसंहारे ग्रीष्मत एव वर्णनं प्रारब्धम् ।

अत्र केचन आचार्याः फाल्गुनमासात्प्रभृति मासद्वयक्रमेण वसन्तादय ऋतवः सन्तीति कथयन्ति । अस्मिन् मते एकैकमासस्यान्तरो भवति । अस्मिन् मतभेदे मन्ये यत्पूर्वमतं प्राकृतिकमाधारमवलम्ब्य स्थापितं द्वितीयं शोधनपरम् । चर्चितश्चैष विषयश्चरके सूत्राध्याये स च उद्धरणवाक्ये स्फुटीभविष्यति । प्रसिद्धिश्चेदृश्येव जगत्युपलभ्यते लोकाः फाल्गुनं वासन्तिकं मत्वा तत्र वसन्तोत्सवाङ्गभूतं गानं गायन्ति तादृशीं छटां पश्यन्ति प्रकृतिश्च तथैवाभाति । क्वचन वर्षर्तोर्द्वौ भेदौ प्रावृट् वर्षाश्च, प्रवृष्टेः कालः प्रावृट् आषाढश्रावणात्मकः, तस्यानुबन्धो हि वर्षाः, अर्थात् प्रकृतस्यानुवर्तनम् भाद्राश्विनात्मकाः तथा शीतकाले एक एव ऋतुर्हेमन्तोऽस्ति । कुत्रचित् शीतकाले हेमन्तशिशिरौ द्वावृतू तथा वर्षर्तौ एक एव ऋतुर्वर्षा इति वर्ण्यते । एष च भेदो प्राकृतिकसंशोधनोभयमार्गमाश्रित्य वर्तते । संशोधनं चिकित्सितमित्यर्थः । अर्थादत्रैवंविधो वर्षाद्यृतुविभागो दोषोपचयप्रकोपोपशमनिमित्तः । उक्तञ्च चरके—

"तत्र खलु तावत् षोढा प्रविभज्य कार्यमुपदेक्ष्यते । हेमन्तो ग्रीष्मो वर्षाश्चेति शीतोष्णवर्षलक्षणास्त्रय ऋतवो भवन्ति तेषामन्तरेष्वितरे साधारणलक्षणास्त्रय ऋतवः प्रावृट् शरद्वसन्ता इति । प्रावृडिति प्रथमः प्रवृष्टेः कालस्तस्या-

नुबन्धो वर्षाः। एवमेते संशोधनमधिकृत्य षड् विभज्यन्ते ऋतवः" (च० वि० स्था० अ०८)।

एवं भौगोलिकाधारेणाऽपि ऋतुषु अन्तरं भवति। देशस्य दक्षिणे पूर्वे च भागे यत्र वर्षाधिक्ये तत्र प्रावृड् वर्षाश्च द्वावृत् शीतकाले च केवलो हेमन्त एव। देशस्योत्तरे पश्चिमे च भागे वृष्टिः स्वल्पा भवति शीताधिक्यञ्च प्रवर्तते तत्रैक एव ऋतुर् वर्षाः, तथा शीतकाले हेमन्तशिशिरौ द्वावप्यृतू स्तः। उक्तञ्च काश्यपसंहितायाम्—

भूयो वर्षति पर्जन्यो गङ्गाया दक्षिणे तटे।
अतः प्रावृट् च वर्षाश्च ऋतू तत्र प्रकल्पितौ॥
तस्या एवोत्तरे देशे हिमवद्विन्ध्यसङ्कुले।
भूयः शीतमतस्तत्र हेमन्तशिशिरावुभौ॥

एतत् केषाञ्चिदनभिमतमप्यस्ति। चान्द्रमासापेक्षया सौरः स्थिरः, आङ्ग्लमासोऽपि। तस्मादेतदपेक्षया ऋतुविचारोऽपि स्थिरो भवति। भारतस्य भिन्नभिन्नभागेषु वर्षणशैत्यौष्ण्यानां भिन्ने भिन्ने समये प्रादुर्भावाल्लाक्षणिकर्तूनां वर्णनं प्राप्यते स एव स्वरूपात्मक ऋतुः। एष सर्वापेक्षया महत्त्वपूर्णः। उक्तञ्च—

मासराशिस्वरूपाख्यमृतोर्यल्लक्षणत्रयम्।
यथोत्तरं भजेच्चर्या तत्र तस्य बलादिति॥ अ० सं० सू० अ० ४

वेदेऽपि त्रयाणामृतूनां चर्चा वर्तते यथा—

द्वादश प्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत।
तस्मिन्त्साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः॥

ऋ० १।१६४।४८

तत्र सायणः—

तथा त्रीणि त्रिसंख्याकानि नभ्यानि नाभ्याश्रयाणि फलकानि तत्स्थानीयानि ग्रीष्मवर्षाहेमन्ताख्यान्याश्रितानि··· ॥

वस्तुतस्तु शैत्यौष्ण्यवर्षणलक्षणानुसारात् शीतोष्णवर्षास्त्रय एव ऋतवो भवन्ति, किन्तु एषु त्रिषु द्वयोर्द्वयोर्मध्ये पूर्वस्यर्तोर्लक्षणे न्यूनता यदा समायाति भाविनश्च प्रारम्भिकलक्षणं प्रवर्तते तदाऽन्तरालेऽन्ये त्रयः प्रावृट् शरद् वसन्ता ऋतवः कल्प्यन्ते।

यथा चरके—हेमन्तो ग्रीष्म वर्षाश्चेति शीतोष्णवर्षलक्षणास्त्रय ऋतवो भवन्ति — — — इत्यादि (च० वि० अ० ८)। एवम् अतिशीतोष्णवर्ष-लक्षणास्त्रयो मन्दशीतोष्णवर्षलक्षणास्त्रय इति। शिशिरादयः षट्, वर्षादयः षट्, इति मतद्वये एतदेव कारणं प्रतिभाति यद् आयुर्वेदशास्त्रानुसारं रसं बलञ्चाधिकृत्य शिशिरादयस्तथा दोषसञ्चयादिनिमित्तं संशोधनमधिकृत्य वर्षादयः प्रोक्ताः। विषयेऽस्मिन् विस्तरेण आयुर्वेदशास्त्रे वर्णितं तत्त्रैव द्रष्टव्यम्।

एवं यत्र ऋतुद्वयं कल्प्यते तत्रापि लाक्षणिक एव हेतुरनुसन्धातव्यः, शीतस्य प्रारम्भः कार्तिकमासादेव समाप्तिश्च यावच्चैत्रम्। ग्रीष्मस्य प्रारम्भो वैशाखतः समाप्तिश्च आश्विनं यावत्। अतोऽयमपि लाक्षणिको भेदः। अयनद्वयवद् ऋतु-द्वयकल्पना।

अत्र मतभेदे सत्यपि प्रायः षड् ऋतूनादाय वेदेषु कर्मकाण्डविधानम्। आयुर्वेदे जनानां भिषजाञ्च चर्चा विहिता। काव्येषु तत्सौन्दर्यस्य, प्रकृतेः, समयोद्भूतरम्यतायाश्च वर्णनं वर्तते। अतोऽत्र "षड् ऋतवः" इति सिद्धान्तमनु-सृत्य प्रथमस्तेषां स्वरूपं विविच्य तत्पश्चात् किञ्चिद् विचारयिष्यामि। तत्र वसन्तस्य प्राथम्यं प्राधान्यं प्रायः सर्वसम्मतम्। नहि केवलं प्रधानता अपि त्वयं भगवत्स्वरूप एव 'ऋतूनां कुसुमाकरः' (गी० १०।३५) इति वचनात् सरसः सुन्दरः सर्वाह्लदकश्चैष ऋतुः वसन्त्यत्र मदनोत्सवाः, वसन्ति सुखमस्मिन् जनाः, वा इति वसन्तः (वस्+झच् 'तृभूवहिवसि— — —उ० ३।१२८) चैत्र-वैशाखात्मकः; फाल्गुनचैत्रात्मकश्चेति केचित्। वसन्तः कुम्भमीनयोरिति प्रयोगदर्शनात्। द्वितीयमतं बाहुल्येन जनैर्मन्यते प्रकृत्यापि तदेवाभ्युपगम्यते। अनन्तरमायाति ग्रीष्मो यो हि निजौष्ण्येन व्याकुलीकरोति लोकं शोषयति च रसान्। ग्रसते रसानिति ग्रीष्मः (ग्रसु अदने इत्यस्माद् धातोः 'ग्रीष्मः' उ० १।१२७ सूत्रेण मक् ग्रीभावः पुगागमश्च निपात्यते)। ग्रस्यन्तेऽस्मिन् रसाः (नि० ४।४।२७), ग्रस्यन्तेऽस्मिन् रसाः सूर्येणेति तत्रैव दुर्गः। ज्येष्ठाषाढात्मकोऽय-मृतुः। अस्याऽग्रे समायाति वर्षर्तुः, प्रावृट् च कथ्यते स एव। यद्यपि केचन अत्र ऋतुद्वयं मन्यन्ते प्रावृट् वर्षाश्च किन्त्वत्राहम् एक एवेति स्वीकरोमि। अस्मिन् ऋतौ मेघो वृष्टिद्वारा ग्रीष्मजं तापं हृत्वा पृथिवीं सस्यशाद्वलसङ्कुलां करोति पूरयति च जलाशयान्। वर्ष वर्षणमत्रास्ति अर्श आद्यच (५।२।१२७) टाप् (४।१।४) नित्यबहुवचनान्तः भूम्नि बहुत्वे वर्षन्ति इत्यर्थात्। (वृषु सेचने घञ्=वर्ष+ अच् ततष्टाप्) प्रावृट् चैवम् (वर्षणं वृट् संपदादित्वात् ३।३।१०८ वा० क्विप्,

प्रकृष्टा वृडत्र प्रावृट् 'नहि वृति— — —६।३।११६ इति दीर्घः) अथवा प्रकर्षेण आसमन्ताद् वर्षतीति प्र—आ—वृष्—क्विप् । वर्षत्यासु पर्जन्यः, (नि० ४।४।२७) अथवा वृष्यते इति वर्षः, अज् विधौ 'भयादीनामुपसंख्यानम्' (वा० ३।३।५६) इत्यच् यद्वा व्रियते प्रार्थ्यत इति वृ धातोः वृतृवदि — — — (उ० ३०३।३४२) इति सः।

अथवा वर्षतीति पचाद्यच् वर्षो मेघः स अस्यास्तीति अर्श आद्यच् । शरत्तु शीर्यन्तेऽस्यां पाकेनौषधयः । शृ हिंसायां 'शृदृभसोऽदिः' (उ० १।१३०) इत्यदिः । 'शरच्छृता अस्यामोषधयो भवन्ति शीर्णा आप इति वा' (नि० ४।४।२५) शृताः पक्वा इति दुर्गः । वर्षासु प्रवृद्धानि स्रोतांसि शरदि विशीर्य छिद्यन्त इति च । शरच्छब्दस्तु स्त्रीलिंगः भागुरिमते आबन्तोऽपि संवत्सरपर्यायोऽपि वर्तते: मन्ये कदाचिदेष ऋतुर्वर्षस्यादिमोऽन्तिमश्चासीद् येनाऽयं शब्दो वर्षपर्यायतां लभते । प्रतीयते चाग्रहायणशब्दस्य मार्गे प्रयोगात् । फसलीवत्सरोऽपि इत एव प्रवर्तते । अयं च ऋतुर् अत्यन्तप्रसन्नो स्वच्छो मनोहारी सस्यादिसम्पन्नश्च । एतदनन्तरं हेमन्त आयाति यतः शैत्यं प्रवर्तते । हन्ति लोकान् शैत्येन, इति हेमन्तः (हन्—'हन्तेमुर्ट् हि च, उ० ३।१२९ झच् हिरादेशो मुडागमो गुणश्च) मार्गपौषमासद्वयात्मकोऽयमृतुः । अत्र हिमपातो भवति शैत्यं च । निरुक्ते—हेमन्तो हिमवान् हिमं पुनर्हन्ते· र्वा हिनोतेर्वा – – – – तत्र दुर्गः—तत्र हि बहु भवति हिमम्' तद्धि हन्ति औषधिवनस्पतीन् । हिनोतेर्वा—तर्पणार्थस्य तेन हि पुष्यन्ति यवादयः । गमनार्थस्य वा हन्तेः । तद्धि गमयति क्षयं भूतानि । शिशिरस्तु—शश् प्लुतगतौ इत्यस्माद् (अजिरशिशिर— — —उ० १।५३) इति सूत्रेण किरच, उपधाऽकारस्य इत्वं च निपात्यते । निरुक्तिस्तु शशन्ति धावन्ति यस्मिन् पथिका इति । निरुक्ते—शिशिरं शृणातेः शम्नातेर्वा (१।१०।१) तत्र दुर्गः—हिनस्ति तस्मिन् काले अप्रतिवध्यमानोऽतिशयेन दावाग्निः शुष्कानोषधिवनस्पतीन् । शम्नातेर्हिंसार्थस्यैव, नार्थकृतो विशेषः । अस्मिन् ऋतौ शैत्यं हिमवाधा च क्रमशो ह्रसति । इत्थं निरुक्तिभिरेव ऋतूनां स्वरूपमुपवर्ण्याऽधुना तद्विषये किञ्चिच्चर्च्यते ।

यद्यपि ऋतूनां कर्तव्यचर्याद्यपरपक्षानाश्रित्य वेदादिशास्त्रेषु बहुधा विवेचितं तत्तु इह न विवक्षितं किन्तु सौन्दर्यपक्षमवलम्ब्य यत्प्रतिपादितं तदेवेहोपादीयते । सौन्दर्यपक्षेऽपि वेदब्राह्मणरामायणमहाभारतपुराणादिषु ऋतूनां वैभवं वैलक्षण्यं पर्याप्तमुपवर्णितम् । वेदादेव प्रवर्तमाना अक्षुण्णा एषा परम्परा काव्यधारायामागत्य नितरां विकासमलभत । ऋतूनां कमनीयता, ऋतुषु प्रकृतिसौन्दर्यं, तदानीन्तनजगद्व्यवहारः, परिस्थितिः, सामयिकचित्रं, प्रकृतौ चैतन्यदृष्टिः

चैतन्ये च प्राकृतिकदृष्टि:, परां काष्ठां प्रापु:। एतत् सर्व भिन्नभिन्नरूपरचना शैलीद्वारा सहृदयान् आनन्दयति। अस्ति च ऋतुवर्णनं महाकाव्यस्य धर्म एव उक्तञ्च साहित्यदर्पणादौ काव्यलक्षणविषये—प्रातर्मध्याह्नमृगयाशैलर्तुवनसागराः, (सा० द० ६।३२२) एतदनुसृत्यैव महाकवयः स्वस्वकाव्ये यथासंभवं सर्वेषामृतूना-माहोस्वित् केषाञ्चिदेव वर्णनं समासेन विस्तरेण वाऽकुर्वन्। परिचेतुं काचित् तालिकाऽत्र दीयते।

| | | |
|---|---|---|
| रघुवंशे ९ | सर्गे | वसन्तवर्णनम् |
| ,, १६ | ,, | ग्रीष्मवर्णनम् |
| कुमारसम्भवे ३ | ,, | वसन्तवर्णनम् |
| किरातार्जुनीये ४ | ,, | शरद्वर्णनम् |
| शिशुपालवधे ६ | ,, | षड्ऋतुवर्णनम् |
| नैषधीयचरिते | | |
| भट्टिकाव्ये २ | ,, | वसन्तवर्णनम् |
| जानकीहरणे ३ | ,, | वसन्तवर्णनम् |
| ११ | ,, | प्रावृषो वर्णनम् |
| हरविजये ३ | ,, | ऋतुवर्णनम् |
| रावणार्जुनीये १ | ,, | शरद्वर्णनम् |
| विक्रमाङ्कदेवचरिते ७ | ,, | वसन्तवर्णनम् |
| १२ | ,, | ग्रीष्मवर्णनम् |
| १४ | ,, | शरद्वर्णनम् |
| १६ | ,, | हेमन्तशिशिरवर्णनम् |
| धर्मशर्माभ्युदये ११ | ,, | षड्ऋतुवर्णनम् |
| श्रीकण्ठचरिते ६ | ,, | वसन्तवर्णनम् |

इतोऽन्येषु काव्येषु ततोऽतिरिक्ताः स्वतन्त्रता अपि ऋतुसंहारादिग्रन्थाः सन्ति यत्र ऋतूनां सुषमा निरूपिता वर्तते।

यद्यपि काव्येषु महाकविभिर्विषयेऽस्मिन् बहु वर्णितम्, तैश्च या कल्पना, शैली, सरसता, अलङ्कारः, शब्दविन्यासः, अर्थगाम्भीर्यम्, वृत्तम्, वस्तु, हृदय-हारिता, मानवीकरणम् विलासश्चेत्यादि कविकर्मोपदर्शितम्। तत्सर्वमपूर्वमेव दुर्लभञ्चान्यत्र। किन्तु तावन्मात्रेण सन्तोषो न कार्योऽन्यथा नवरचनामार्ग एव पिहितः स्यात्। पुरातने वस्तुनि विद्यमानेऽपि नवः प्रयासो विधीयते जनैरिति परम्परा। इत्यालोच्यैव मामकी प्रवृत्तिरत्र जागर्ति। यद्यपि नाऽहं कविर्नापि

काव्यशास्त्रवेत्ता तथापि प्राचीनकविवर्णिते ऋतुसौकुमार्ये विद्यमानेऽपि मानसौत्सुक्यविवशो बालचापल्यमिव यथाशक्ति किञ्चित् कर्तुं प्रयते। आशासे च सहैव यदेषा मे कृतिः सहृदयहृदयानि बालकौतुकमिवोन्मुखीकर्तुं समर्था भविष्यति। यदि कथञ्चिदशक्ता स्यात्तर्हि मे मानसमेव सन्तोष्य सफलत्वमेष्यति।

अस्मिन् ऋतुवर्णने समयानुकूलकृषिकुसुमफलानां विशेषतया ग्रामीणवस्तूनां प्रायो विस्तरेण वर्णनं वर्तते। भाषा चात्र सरला। केवलं स्वाभाविकवर्णनमेवास्ति नात्रालङ्कारनिवेशप्रयासो यदि वर्तते तर्हि स्वयं प्राप्त एव। वसन्तवर्णने फाल्गुनमासमपि तत्र निवेश्य ऋतुवर्णनमाचरितम्। लोकव्यवहारात् क्वचन तादृशवचनोपलब्धेश्च।

अन्ते उत्तरप्रदेशीयसंस्कृत-अकादमी-संस्थां सभाजये याऽस्य पुस्तकस्य प्रकाशने कतिपयसहायतामदात्। अनन्तरं लखनऊनगरस्थाखिलभारतीयसंस्कृतपरिषदं प्रति आभारं प्रकटयामि या पुस्तकस्यास्य प्रकाशनं स्वकीयौदार्येणाङ्गीकृतवती।

दिनाङ्क २४—९—७८ रामनारायण त्रिपाठी

## बसन्तः

यत इदं विततं जगतीतलं
लसति यत्कृपया बहु भूषितम् ।
विशति यत्र लये शयितुं पुनर्—
जयति सा प्रकृतिः परमेश्वरी ॥१॥

श्वसिति जीवति मोदत ईहते
स्वपिति यत्र च जीवचयः सदा ।
नमति कालममुं पुरुषं परं
कृतपुटाञ्जलिरेष सुधीजनः ॥२॥

जनिमतां जनकं मदनं वरं
सुहृदमस्य च लोकहिते रतम् ।
सविनयं त्वभिवन्द्य करोम्यहं
कतिपयैः कुसुमाकरवन्दनम् ॥३॥

सरति शीतल-मन्द-समीरणो
न परिचीयत आतपवेदना ।
अपगता जडता हिमपातजा
सुखमयो हि वसन्तसमागमः ॥४॥

विकसिता परितः सुमनोऽटवी
मुखरिता भ्रमति भ्रमरावली ।
विकचिता सहकारसुमञ्जरी
पिहितपीतपटा च लताढकी ।।५।।

कृषक-कण्टक-शोधनदक्षिणः
कणिशशालियवो बहु राजते ।
क्व च कलायलता फलिता भृशं
समय एष वरो जनसौख्यदः ।।६।।

कुसुमिताः सितसर्षपनालिकाः
कृषकमानस-मोदसमेधिकाः ।
कुसुमचित्रविचित्र-सुपङ्क्तिभि—
र्हरिति भान्ति महाकृषिवाटिकाः ।।७।।

विविधशाटिकयाऽप्यवगुण्ठिता
प्रकटयौवनरागदशा वधूः ।
दिशि धराऽभिनवैव विलोक्यते
सुमनसां मनसामपि हारिणी ।।८।।

कलुषता विगताऽनुगताऽच्छता
शशिनि सूर्यकरे दिशि खे नरे ।
अरुणिमोदयमेत्यधुनाऽधिकं
नववधूशुचिपद्मकपोलयोः ।।९।।

उपवने भवने च वने वने
सरसि सानुनि सस्यनिकेतने ।
विदिशि राजपथेष्वधिवीथिकं
मधुमयो ध्वनिरत्र निशम्यते ।।१०।।

अवलतामवला विजहाति नो
सवलतां न दधाति निजे प्रिये ।
मदनमित्रवशीकृतमानसा
विगतमानमदा परिलोक्यते ॥११॥

वचसि नर्मकथा नहि केवलं
युवजने युवतीजनमध्यगे ।
अपितु बालजनेऽपि तथा कथा
जगति दिव्यवसन्तविशेषता ॥१२॥

मनसि मोदजनिश्चिति सन्तति-
भृंशशुचिर्धियि संस्फुरणं तनौ ।
विहसनं वदने नयने महः
सुखकरः समयः कुसुमाकरः ॥१३॥

शिथिलताऽलसताऽपि च कुण्ठता
निखिलकुञ्चितता विगताऽधुना ।
वपुषि कर्मणि वाचि न वर्तते
मनसि कातरताऽवयवेषु च ॥१४॥

निविशते नितरां कुसुमाकरे
मदनमादकता युवतीजने ।
युवजनेऽपि, ततोऽल्पतया च सा
सकलजीवचराचरसङ्कुले ॥१५॥

विवसने नरि सम्प्रति नेक्ष्यते
चिबुकजानुसमर्पणवासना ।
हुतवहाऽऽश्रयता रविसेवनं
दिनमिदं बहु दीनजने हितम् ॥१६॥

प्रतिदिनं क्षरति क्षणदाक्षणः
प्रतिनिशं दिवसोऽपि विवर्धते ।
सुखकरी समताऽसमताऽवरा
कुसुमसायकमित्रसमागमे ॥१७॥

जगति लोचनगोचरतां गतं
विकसितं यदिदं चिदचिन्मयम् ।
नयति तन्निखिलं रमणीयतां
मदनपक्षधरः कुसुमाकरः ॥१८॥

सुकविकाव्यनिबन्ध इवानिशं
विविधभावसमृद्धिविवर्धनः ।
प्रकृतिमानयते सुषमानिधिं
मधुरिमामधुना मदनेष्टकृत् ॥१९॥

नयति मादकतां कुसुमाकरः
क्षिपति तां च दिशं विदिशं प्रति ।
मुनिजनोऽपि यदीयवशंवदो
भवति का नु कथा गृहमेधिनाम् ॥२०॥

कलिकया कलकुन्दलताऽऽवृता
नववधूरिव मौक्तिकमालया ।
हरति कम्रतया प्रसभं नृणां
विषयिणां विषये निरतं मनः ॥२१॥

विविधपुष्पचयैरुपशोभिता
उपवने स्थलपद्मसुपङ्क्तयः ।
विषयसक्तहृदां किमु गेहिनां
हृदयमाददतेऽपि तु योगिनाम् ॥२२॥

प्रकृतिरत्र निविश्य सुपेशला
निजगुणान् गदितुं भ्रमरान् मुदा ।
सततमाह्वयतीव विलोक्यते
प्रचलिताञ्चलदृष्टिशयाऽऽशया ॥२३॥

लसति नूतनपल्लवमालिका
तरुनिकायधृता हरिताऽऽरुणा ।
तव कृतिं कुसुमाकर ! बिभ्रती
मनुजलोचनहर्षवितानिका ॥२४॥

क्व च मधूकतरू रससङ्कुलं
किरति पुष्पवरं धरणीतले ।
वसुमतीं बहुमौक्तिकमालया
स्वजननीं भृशमर्चति किं कृती ॥२५॥

क्व चणकेष्वतसीषु च गुम्फिता
कृषकदैन्यघटीचयभेदिका ।
विविधत्रप्रवरेषु विराजिता
फलमयी गुटिका बहु शोभते ॥२६॥

पुनरहो कसिता हसिताऽसिता
सरसि कञ्जलता वरनाडिका ।
अपगता सुषमा पुनरागता
सरसिजेषु वसन्तसमागमे ॥२७॥

विरहिणां हृदयं परिमर्दयन् ।
विरहिणीजनमानसमर्दयन् ।
पिकरवः सहकारवने घने
भवति माधवमासि मनोहरः ॥२८॥

उपवनेषु वनेषु विलोक्यते
रुचिररङ्गविरङ्गमयी छटा ।
नवनवाऽनुगता कुसुमाकरं
मदमयी मधुरा मधुयामिनी ॥२९ ॥

कुसुमकोरकजालसमेधिता
सुरभिवासितसर्वदिगन्तरा ।
लसति कुञ्जमयी गृहवाटिका
धनवतां धनदीप्तिनिदेशिका ॥३०॥

जहति जीर्णदलानि महीरुहाः
प्रतनरागचयानिव योगिनः ।
दधति नूतनपल्लवकोरकान्
नवनवाऽभिनयानिव नर्तकाः ॥३१॥

ददति मुक्तकराः समुपासिता
नृपवरा इव भृत्यगणाय वै ।
सकलवप्रवराः कृषिसम्पदः
कुसुमिते निखिले हरितां मुखे ॥३२॥

नभसि तारकिते विमले शुभे
हिमविहीनविभासितमण्डलः ।
कुमुदबन्धुरतीव सुखाकरः
भवति माधवमासि महोज्ज्वलः ॥३३॥

विमलतां परियाति नभस्तलं
वियति भाति निशाकरमण्डलः ।
निशि तुषारविहीनतया रुचा
निकुरुते सकलं सितमण्डलम् ॥३४॥

नयनरश्मिझटित्यपकर्षणे
युवजनेषु सुमेषुनिवेशने ।
कमलिनीमुखकान्त्यपनोदने
प्रभुरुदेति मधौ रजनीपतिः ॥३५॥

पटवरं रजनीरसरञ्जितं
कनकभूषणमादधती वधूः ।
सुमनसां हृदयानि दरिद्रती
दिशति दिक्षु वसन्तमुपागतम् ॥३६॥

गृहनदीतटवीथिधराधराः
ध्वनिमयाः परितोऽभित आसते ।
प्रतिमुखं ललितस्वर एधते
तदपि किं न वसन्त इहाश्नुते ॥३७॥

ऋतुपतेरवलोक्य शुभागमं
निजगृहाङ्गणचत्वरभूमिषु ।
अपचितिं कुसुमान्वितपाणिभिः
प्रमुदिता प्रकृतिः कुरुतेऽनिशम् ॥३८॥

स्वयमहो मदनो विमदोऽतनुस्
तनुधरेषु मदं तनुतेतराम् ।
बलमिदं कुसुमाकर ! ते परं
न तु कथं क्रमते तनुधारिणः ॥३९॥

विहसिता प्रकृतिर्विकृतिर्गता
परिसरेषु विलोक्य सुमाकरम् ।
कथय के न हसन्ति नवागतं
समुपलभ्य महर्धियुत जनम् ॥४०॥

अवनिरातपवृष्टिनिपीडिता
चिरमुपोषितशैत्यचपेटिका ।
निजगृहेषु भवन्तमवेक्ष्य सा
हसति मे विगतं कलुषं वयः ॥४१॥

विलुलिता न घनाघनधारया
तरणितिग्मकरान्वितझञ्झया ।
प्रकृतिराततया हिमलेखया
प्रकृतिमेति वसन्तसमागमे ॥४२॥

मनसिजः कुसुमाकर ! ते बलाद्
धनुषि रोपयितुं निखिलान् शरान् ।
प्रभवति प्रणिपातयितुं प्रियान्
प्रियतमाप्रियपङ्कजपादयोः ॥४३॥

यवकलायचणेषु समुन्नताः
कुसुमिता फलिता दिशि राजिकाः ।
उपदिशन्ति जलान् निजकर्मभिः
सफलयन्तु भवन्त इहात्मनः ॥४४॥

त्वमपि हे जनते ! भव मानिता
जगति मत्समतां भज सर्वदा ।
निजजनेषु मनाङ् नहि शोभते
कृशतनुर्विफलो हि निरादृतः ॥४५॥

विविधवीरुधपुष्पवृता स्थली
हरितकोमलनूतनदूर्वया ।
विलसिता जनमङ्गलदायिनी
भगवतीव समर्चितविग्रहा ॥४६॥

प्रियतमो वृषभानुसुतापतेः
प्रियवरो रतिनाथमनोऽम्बुधेः ।
प्रियनिभः पिककञ्जमृगीदृशां
प्रियकरोऽसि वसन्त ! जगत्त्रये ॥४७॥

उपगते समये कुसुमाकरे
जडजलं नहि कञ्चन् बाधते ।
यदि जडे क्षमता सुखदेदृशी
चितिमतां विषये खलु का कथा ॥४८॥

हरितकोमलचञ्चलवर्तुल-
प्रतनुनूतनपल्लवपङ्क्तिभिः ।
कुसुमसौरभसेवितशिंशपाः
हरति कस्य मनो नहि चञ्चलम् ॥४९॥

अधिदिशं करवीरमहीरुहाः
कनकपुष्पचयैः श्रुतिभूषणम् ।
विरचयन्ति पटं कनकप्रभम्
कुसुमिताः कृतमालनगाः क्षितेः ॥५०॥

चलदलः स्वदलं मृदुशष्कुली-
मिव वटश्छदनं पुटसन्निभम् ।
समुपहृत्य जलं तरुलाञ्जली
प्रकृतिसत्कृतिमाचरतेऽधुना ॥५१॥

मृदुशिरीषसुमावलिवासना
विहरतामुषसि प्रहरे शुचौ
अवयवेषु तनोर्नवचेतनां
वितनुते कुसुमाकरसम्पदा ॥५२॥

विकसिता सुमना नवमालिका
सहचरी वरवेल्लिवितानिका ।
मरुवकी सुजपा मधुमाधवी
प्रमदयन्ति न कं कुसुमाकरे ॥५३॥

स्वदयितामुखसङ्गसुवासितान्
तदनुरागकटाक्षसमर्पितान् ।
मधुरसालरसैः सहितान् रसान्
पिबति कोऽपि सखे ! विधिभाग् जनः ॥५४॥

चमरिकाः कुसुमैर्गुणिनोऽगुणा–
निव दलानि विधाय गुणोत्करैः ।
गगनहैमवतीसुषमां क्षितौ
विदधते जनलोचनहर्षिणीम् ॥५५॥

जनपदो नहि कोऽपि न जन्तवो
व्रततयस्तरवो न हि तादृशाः ।
स्पृशति यान्न वसंन्तकरः शुचिः
किरति निम्बतरुः सुरभिं कटुः ॥५६॥

सुमसमूहसमावृतपाटलाः
कुरबका वरशाल्मलिकिंशुकाः ।
मदनवह्निशिखां दधतेऽधुना
प्रकटयन्ति जडेऽपि चितिं भवे ॥५७॥

पतितपुष्पचयाऽऽवृतमेदिनी
युवतिराभरणार्चितविग्रहा ।
इव विभाति मनोजसखे ! वरा
मृगयते च पतिं विपिनस्थितम् ॥५८॥

वकुलवञ्जुलवञ्जुलसौरभं
सुखयतीव तटस्थदृशाऽखिलान् ।
विकुरुते च मनांसि वियोगिनां
विषमपक्षतयाऽरुणवञ्जुलः ॥५९॥

मसृणवर्तुलपीतरसान्वितैः
फलचयैर्मुचुलिन्दपलाशिनः ।
उरसिजैरिव ह्रापितकञ्चुकै-
रवनियौवनमेव वितन्वते ॥६०॥

प्रियसरोरुहनाशनकारणात्
समुपलब्धसपत्नतया रविः ।
पटुतरैः स्वकरैः क्रमशोऽधुना
हरति सान्द्रतुषारपरम्पराम् ॥६१॥

प्रिय ! मयैव जितं निखिलं जगतं
तव शरव्यय एतु दिगन्तरम् ।
इति वनप्रियकूजनकैतवाद्
वदति पञ्चशरं कुशलो मधुः ॥६२॥

प्रकृतिभद्रविधित्सुविभावसु-
र्हिमतमीपरिणाहसुसम्पदम् ।
भृशमपास्य समेधयते दिनं
निजकरान्न करोति भयङ्करान् ॥६३॥

अलकपाशनतास्त्रिवलीयुता
जघनभारनता नतमध्यमाः ।
युवतयो वरशाटिकयाऽऽवृता
वद हरन्ति न कस्य मनो मधौ ॥६४॥

दयित ! पश्य मनोजमहोत्सवो
मदयिता भुवि फाल्गुन ईड्यते ।
ह्रिय इताः शिथिलं समबन्धनं
कुरु वयोऽमृदु नौ सफलं सखे ! ॥६५॥

मम तवापि च यौवनमीदृशं
नहि भविष्यति लोलमवाप्स्यते ।
अपगतं झरवारिनिभं गतं
कुरुवयोधनसार्थकतां सखे ! ॥६६॥

अपगते समये कुसुमाकरे
प्रिय ! करे विफलत्वमवाप्स्यते ।
झटिति देहि ततो भुजबन्धनं
पिब ममाधरपूर्णसुधारसम् ॥६७॥

उपगते समये कुसुमाकरे
मदनमादकतामुदितो जनः ।
क्षिपति लिम्पति रङ्गमबीरकं
मिथ इतस्तत आश्वधिहोलिकम् ॥६८॥

नवनवेदृशरूपमिदं प्रिये !
न पुनरैष्यति कान्तकलेवरम् ।
अत इमं स्वजनं च मनोभवं
निजवपुः सुरभिं च कृतार्थय ॥६९॥

कटितटे वदने पृथुजङ्घयोः
कुचयुगे रसिको वरयोषिताम् ।
क्षिपति रङ्गमलं पिचुकारिभि-
र्मदभरो मधुनाऽपि मधौ विना ॥७०॥

पथिषु पान्थजनस्तरुणीजनं
प्रसभमाह्वयति स्वकरेङ्गितैः ।
हसति नृत्यति गायति भाषते
तव वसन्त ! महामहिमा भवे ॥७१॥

अयि वसन्त ! तव प्रभुतेदृशी
न गणयन्ति जना वरतां ह्रियम् ।
परिहसन्ति मिथो विहसन्त्यलं
व्यवहरन्त्यपशब्दमनारतम् ॥७२॥

सखि ! निवारय तं प्रियमात्मनः
सुरभिफाल्गुनमासि यतस्ततः ।
पथि निरीक्ष्य सतालमयं च यो
हसति नृत्यति याचत इङ्गति ॥७३॥

द्विजजनोऽपि मिलत्यधुना समैः
श्वपचकोलकिरातकुविन्दकैः ।
सह मनागपि नो कुरुते घृणां
विषमताऽपगता समताऽऽगता ॥७४॥

ऋतुपते ! महिमानमहं कथं
निगदितुं प्रभवामि वचःपरम् ।
वदति पार्थममुं जगदीश्वरो
यदुपतिर्निजरूपमनामयम् ॥७५॥

ऋतुषु मोदकरः कुसुमाकरो
निभृतमेव सखे ! स्वयमस्म्यहम् ।
गिरिधरेण कथेयमुदीरिता
किमपि तत्र वचो नहि शिष्यते ॥७६॥

भगवतः कुसुमाकररूपिणो
निगदिता सुषमा निजशक्तिभिः ।
लखनऊनगरे वसता मया
निगमवह्निखनेत्रमितेऽब्दके ॥७७॥

ग्राम्यप्रकृतिमाश्रित्य महाकालस्य तुष्टये ।
रामनारायणोऽकार्षीत् कुसुमाकरवन्दनम् ॥७८॥

---

## ग्रीष्मः

सकलमङ्गलकृत्यविभासितो
विविधवाद्यसुगीतिमनोरमः ।
निखिलधान्यधनादिसमेधितो
विजयतां तप एष महोज्ज्वलः ॥१॥

यदमितप्रभुतावशतो रविर्
हुतवहः श्रयते च करालताम्
हिमकरोऽपि बिभेति हिमोक्षणे
निधिममुं प्रणुमः खलु तेजसाम् ॥२॥

तपति यत्र तपे तपनोऽधिकं
विकुरुते जडजङ्गमसंहतिम् ।
अपचिनोमि तपं कतिभिः पदैः
निधिमहं तमिमं खरतेजसाम् ॥३॥

विविधधान्यखनिः शुभकर्मणां
जनिरुदारतनुः शुचिरुज्ज्वलः ।
कृषकवृन्दसुखावह ईश्वरो
वरनिदाघऋतुर्जयतादयम् ॥४॥

उपगते भुवनं समये तपे
तपनदीर्घतमोष्णगभस्तिभिः ।
विरसिता गलिताः खलु वीरुधा
विकलिता जनजीवनमान्यताः ।।५।।

कलुषितं रजसा गगनाङ्गणं
मलिनतामुपयाति दिशामुखम् ।
विलुलिता प्रकृतेः सुषमा परा
कठिनकालनिदाघसमागमे ।।६।।

क्वचन पक्षिगणाः पथिका जनाः
कपिगणाः पशवो वनजन्तवः ।
मृगयितुं जलभूमिमितस्ततः
कृशमुखा विचरन्ति पिपासया ।।७।।

प्रमुदिता मिलिता वरयात्रिकाः
प्रमुखराः प्रचलन्ति यतस्ततः ।
परिहसन्ति मिथो विहसन्त्यलं
विदधतोऽपि तपं वरसौख्यदम् ।।८।।

अधिखलं विकलाः कृषिकर्मठाः
कणविमर्दनकर्मणि तत्पराः ।
विविधधान्यविशोधनसंरता
न विरमन्ति मनाक् तपनातपात् ।।९।।

वृषगते मिहिरे कृषका जना
बहुविधान्नविभूतिविभूषिताः ।
सुखमय समयं व्यतियन्ति वै
मनसि दैन्यभयं नहि मन्वते ।।१०।।

समय एष तपः समुपागतः
स्वयमलं प्रतपन् परितापयन् ।
निजपराक्रमवैभवतिग्मतां
विशदयन्नधिभूमि विराजते ॥११॥

समय एष करोति बलाबलं
तपहिमागमयो रविरीक्ष्यताम् ।
अतितरां भुवि कोऽपि निसर्गतो
नहि सखे ! सबलो न च दुर्बलः ॥१२॥

व्यपगतः समयः कुसुमाकरः
सुखमयो जनमानसमोददः ।
उपगतो भुवि सम्प्रति तापको
जनमनोबहुकष्टकरस्तपः ॥१३॥

पनसपादपपङ्क्तिमयी वनी
बृहदनल्पफलग्रथितां स्रजम् ।
पदगतां दधती शिरसा मुदा
हरति पान्थविलोलदृगञ्चलम् ॥१४॥

निजकटिं तटिनी नितरां वरा
विवसनामवलोक्य नता ह्रिया ।
वहति दुर्बलतां दयनीयतां
कठिनकालनिदाघसमागमे ॥१५॥

तपविशालतरोष्णतयाऽऽतपा-
दवितुमात्मशरीरमनारतम् ।
मृगयते वसतिं निकरो नृणा-
मिव दवानलपीडितजन्तवः ॥१६॥

वृषगते तरणौ कठिनातपात्
तरुतले प्रविशन्ति विरोधिनः ।
प्रबलशासनपक्षविरोधिनो
बहुमता विमता अपि सङ्गताः ॥१७॥

पिपुरतीह च यद्यपि भूरुहा
अधितप पवनैः सुखदैः श्रितान् ।
परमिमे ददते वटपर्कटी–
चलदलाः श्रमतापहराऽऽश्रयम् ॥१८॥

वहति गन्धवहे स्थिरतां गते
चलति यस्य दलं नितरां सदा ।
चलदलः स निबोधयतीव किं
सततचञ्चलवृत्तिनिदर्शनाम् ॥१९॥

कुसुममूलदलैः फलवल्कलैर्
हरति निम्बतरुर्जनतागदम् ।
करणपञ्चतयेन भिषग् रुजं
भुवि करोति निदाय यथऽगदम् ॥२०॥

सुरभिकृष्णदलैर्बहुकण्टकैः
परिवृतोऽवरदन्तशठस्तरुः ।
रुचिरपीतरसाप्लुतवर्तुलैः
वितनुतेऽत्र फलैः शिशिरश्रियम् ॥२१॥

अरुणकण्टकितैः फलगुच्छकैर्
मधुरसैर्नतनीलदलावलिः ।
हरति 'लीचि'तरुस्तपजां तृषं
परिचिनोति जडेऽस्ति च सौहृदम् ॥२२॥

सुजटया जटितैर्बहुभिः फलैर्
निकृततोयघटै रसपूरितैः ।
अधिगलं परिधाय च मालिकाम्
अनुकरोति मुनिं भुवि लाङ्गली ॥२३॥

तपति भास्करतेजसि यो रसं
वितरति प्रचुरं श्रमनोदनम् ।
विपुलतालतरुः स दलैश्चलैर्
अपवृणोति 'न किञ्च श्रमान्तिके' ॥२४॥

भज सखे ! द्रवसिञ्चितमोदनं
मधुपयः सितया सह सक्तुकम् ।
हिमरसं मथितं वरपानकं
दधि तपातपतापनिवृत्तये ॥२५॥

निशि निशाकररश्मिविभासितं
धवलसौधतलं च नभस्तलम् ।
श्रय सखे ! दिवसे भवनं वरं
सुरभिशीतलशम्बरसेचनम् ॥२६॥

उपवनं विपिनं वटपादपो
नदनदीह्लदपुष्करिणीतटम् ।
वरलताञ्चितकुञ्जमहर्निशं
सुखकरं च नियन्त्रितमन्दिरम् ॥२७॥

मलयजो घनसारहिमानिलौ
तनुपटो व्यजनं पयसार्द्रितम् ।
शिशुशुकप्रमदाखसमल्लिकाः
कमलवारि हरन्ति तपक्लमम् ॥२८॥

अकुसुमोऽपि फलस्तवकावृतो
व्यपमदो मदिरारुणवर्णकः ।
कृमियुतः कृमिनाशनतत्परः
फलति जन्तुफलो मुनिवत् सदा ॥२९॥

छदनमूलपयःफलवल्कलै-
रवयवैः खलु जन्तुफलो हितम् ।
जगति साधयति प्रवलं नृणाम्
अनुमितिं वचनैरिव पञ्चभिः ॥३०॥

रसमयी रुचिराऽरुणपुष्पिता
कठिनवर्तुलरक्तफलस्तनी ।
दशनबीजचयै रतिचर्चिता
नववधूरिव दाडिमवल्लरी ॥३१॥

सकलजीवनिकाय इतस्ततो
जगति धावति घर्मविमोहितः ।
उपगते परचक्रभये यथा
मृगयते शरणं विकलप्रजा ॥३२॥

असहनीयखरांशुकराहतं
भृशतृषाकुलितं महिषीकुलम् ।
मृगयमाणमपः सृणिकायुतं
मुखविनिर्गतजिह्वमवेक्ष्यते ॥३३॥

विटपिनो ददते च यदाऽऽश्रयं
पथि हरन्तितरां पथिकश्रमम् ।
निजतलान्निखिलानपवारयन्
हससि तर्ह्यपि ताल! न लज्जसे ॥३४॥

अविटपोऽपि समुन्नतविग्रहो
रसविहीनतनुश्च रसप्रदः ।
अदनतां न दधाति महाफलः
तदपि तालतरुर्मदगर्वितः ॥३५॥

फलति पीतनकः फलगुच्छकं
वहति घर्मदिनेऽपि समुत्सुकः ।
विपदि धैर्यधनो हि न कुञ्चितो
भवति किन्तु चरत्यनुपद्रुतः ॥३६॥

अवटनिम्नतले च पुरो बहिर्
विरसपत्रगणः पवनेरितः ।
भ्रमति कुत्र न गच्छति संश्रयं
विधिहतो मनुजो भुवने यथा ॥३७॥

तपति भास्वति तप्तसमीरणे
वहति संज्वलिते च भुवस्तले ।
हसति सम्मुखमर्कतरुस्तदा
प्रकृतिरेव सदा हि गरीयसी ॥३८॥

मिहिरतिग्ममरीचिनिपीडितो
ह्रदसरोवरपल्वलकर्दमे ।
दिनमतीत्य खनन् तृणमुस्तकं
चलति कोलगणो निजगह्वरम् ॥३९॥

अभित आवसथीयजनार्भका
अविगणय्य तपातपपीडनम् ।
परिसरन्ति रसालगजाशनी
कनकदुग्धमधुद्रुमतूतकान् ॥४०॥

गिलति भेकमहिर्न सरीसृपं
कवरपुच्छगणो हरिणं हरिः ।
अधिवसन् तरुमाखुमथाखुभुक्
तपतपोरचितेऽत्र तपोवने ॥४१॥

दहनकल्पदिनेशकरैःखरैर्
अतिशयार्तकलेवरचेतसः ।
श्वसितचञ्चलजिह्वशुनां गणा
उपविशन्त्यधिनालि गृहे गृहे ॥४२॥

ननु पलाशतरौ त्रितयं दलं
लगति तीक्ष्णनिदाघमुखे यदा ।
कथय वर्षति देवगणे तदा
किमधिकं नियतेर्न हि लभ्यते ॥४३॥

उपवनाद् विपिनं च ततः परं
हरिगणोऽनिशमेति फलेप्सया ।
पदमिवाप्तुमलङ्कुरुतेऽधुना
स्वदलतोऽन्यदलं तु विधायकः ॥४४॥

निजरसेन सुलेह्यतयाऽर्कतो
हरितवर्णसुगन्धविशेषतः ।
अगदतां विदधद् हरति स्वयं
प्रखरतामजगन्ध इनोद्भवाम् ॥४५॥

अनुपलभ्य विकासमुपद्रुताः
सुमनसां मृदुलाः कलिकास्तपे ।
अरसतामुपयान्ति यथा स्वयं
नववयोविधवाकुचकोरकाः ॥४६॥

चलति गन्धवहे प्रखरोष्मके
तृणपलालपलाशरजःकणाः ।
इत इतो विचरन्ति निरर्गलं
विगतशासनतन्त्रजना यथा ॥४७॥

प्रचुरधर्मसमीरजवात्तपे
व्रजति खण्डमखण्डमनेकधा ।
पृथुतरः कदलीसरलच्छदो
भुवि यथार्तदरिद्रमनोरथः ॥४८॥

समुपजातसमृद्धशिखाकरैः
श्रियमशोकतरुश्छदनेऽर्पयन् ।
जन इवोपकृतीष्टिधरो वरः
निखिलशोकरुजं हरते सदा ॥४९॥

अधितपं तपने दहनेऽरुचिः
शशधरे हिमवारिचये रुचिः ।
दिनमचारु च चारुतरा निशा
प्रिय ! निदाध उपागत ईदृशः ॥५०॥

क्वचन शुष्कजला विवृतारसः
क्वचन कर्दममात्रविशेषकाः ।
क्वचन तुच्छजलाः कृशविग्रहाः
क्व दयनीयदशास्तु जलाशयाः ॥५१॥

अधिदिनं बहिराप्य न संश्रयं
निविशते सदनं खलु शीतता ।
इति विलोक्य निशास्त्वभियाति तां
भवनगर्भमवाप्य बलात्तपः ॥५२॥

हरितकेशजटानिभलम्बितैर्
अविरलैर्मृदुसूक्ष्ममनोहरैः ।
परिवृतश्छदनैर्यजनद्रुमः
कृषति कस्य मनो न बलात्तपे ।।५३।।

दलविहीनदशां भुवि पाटलेः
सकरुणं परिलोक्य सगर्वितः ।
हरितकोटियुतच्छदगुच्छकैर्
लसति सुन्दरदारुतरुस्तपे ।।५४।।

प्रखरधर्मसमुद्गतबिन्दुभिः
विजितविग्रहसुन्दरसन्धयः ।
तनुपटं विनिवेश्य कुचद्वये
युवतयो विहरन्त्युपनिष्करे ।।५५।।

प्रखररश्मिकरैः परिशुष्यतो
निजदलानि विलोक्य महीरुहाः ।
बहुलझङ्कृतझिल्लिकसंरवैः
निजदशासु रुदन्ति महीतले ।।५६।।

विरतिभाजि दिने नवमालिका
निशि विजृम्भितकोरकितानना ।
तपभयादिव सुप्तमनोभवं
मधुलिहामवबोधयति स्वनैः ।।५७।।

परिणयादिमहोत्सवसङ्गता
युवतयः पटभूषणभूषिताः ।
विविधवाद्ययुतैः कलगीतकैः
किमु मनोजजनिं नहि कुर्वते ।।५८।।

तनुपटेन निबध्य कुचद्वयं
धवलसौरभशीतविलेपनैः ।
मृदुमुखं परिमृज्य वराङ्गनाः
पथि तपे विहरन्ति निशामुखे ॥५९॥

शुचिदिने विगते प्रहरद्वये
रविगभस्तिपु भाति दिशोऽभितः ।
जलमिवाक्षियुगे जनसम्मुखे
भुवनमात्मनि वा प्रतिबिम्बितम् ॥६०॥

गलति यः प्रथमं सकलान् रसान्
दिशति तान् चरमे च विनाऽऽग्रहम् ।
ऋतुवरः स महात्मनिभो भवे
विजयते परितो निजतेजसा ॥६१॥

अनिलकीर्णविशीर्णतृणव्रजे
मिहिरचण्डकरक्वथिताम्भसि ।
तपदिनेऽपि चलन्ति सुखं नरा
गुरुतराकृतिर्धूर्हि सदा भवे ॥६२॥

पथिपु राजपथेपु तपे प्रपां
चलितयन्त्रघटीजलनालिकाम् ।
तपनतापतृषाकुलिताऽध्वगाः
समुपलभ्य पिबन्ति रसाऽमृतम् ॥६३॥

प्रखरवातचपेटिकयाऽऽर्द्रता-
मभिकषन् विकपन् वनग्निनमा ।
परिकिरन् तृणपत्ररजःकणान्
शुचिरयं परचक्रमिवागतः ॥६४॥

विरहिचित्तमिवावनिमण्डलं
ह्रदजलं क्वथितं कृशतां गतम् ।
तपदिनेषु विलोक्य न संश्रयं
भजति शीतलता कृपणां दशाम् ॥६५॥

विटपिमूलमुपाश्रयते शिखी
जलखगो नलिनीं तटजां तपे:
गहनकुञ्जलतां भ्रमरो दरीं
हरिगणो हरितापभयाद्द्रुतम् ॥६६॥

हिमकरं च हिमं शिशिरं दिनं
जलधरं तडितं जलवैभवम् ।
विमृगयन् परितः समुपागतो
वरनिदाघ ऋतुर्विजिताहितः ॥६७॥

सरभसं रवितापमपोहितुं
जनगणः सलिलैरवगाहने ।
अविरलं बहुकेलिमुपाश्रयन्
अधितपं न तपं खलु मन्यते ॥६८॥

प्रकृतिवैभववृत्तसमाकुले
द्रुतविलम्बितवृत्तपराञ्चिते ।
ऋतुदशाकथनेपरिपूर्णतां
तपकथामहिमाऽत्र गतोऽधुना ॥६९॥

धन्यागर्भसमुद्भूतो रामनारायणः सुधीः ।
अष्टसप्ताङ्कभूवर्षे ख्रिष्टीये कृतवानिदम् ॥

## वर्षा:

कठिनदीर्घनिदाघनिपीडितं
सुखमयं विदधज्जगतीतलं ।
हरितया लतया परिलिङ्गितो
विजयतामवनौ जलदागमः ॥१॥

कृषकजीवनमुद्भिदसुप्रदं
विविधसस्यसमृद्धिसमेधितम् ।
रसभरं वरदं कतिभिः पदैर्
ऋतुमहं जलदागममाश्रये ॥२॥

ह्रदसरोवरपल्वलदीर्घिकाः
कुसरितः सरितोऽवटनालिकाः ।
उदकपूरमिवाप्य पिपासिताः
सुखमलं दधते जलदागमे ॥३॥

तपनतीक्ष्णकराहतकम्पिता
प्रखरदाघनिदाघविमूर्च्छिता ।
मलिनतां विजहाति रसाऽरसा
जलदकालसमागमहर्षिता ॥४॥

दिशति यो जनजीवनमौषधं
हरति तापभयं तपकल्पितम् ।
किरति बह्निशिखां स बलाहको
विरहिणीजनमानसमन्दिरे ॥५॥

वदति यं जलदं सकलो जनो
भुवन एव विनाऽस्ति विकल्पनम् ।
भुवि नगे विपिने सलिले जलं
समदृशा शमनाय हि वर्षति ॥६॥

सखि ! परन्तु विलक्षणतामयी
गतिरमुष्य दृशोः पथि लोक्यते ।
क्षिपति वायुसखं मयि सत्वर
न जलदोऽनलदोऽयमिति ध्रुवम् ॥७॥

जलधरः क्व च वर्षति धारया
क्व च विमुञ्चति तोयकणानणून् ।
कलिमलातिविपन्नकलेवरः
प्रभुरिवाऽसममाचरति त्वहो ॥८॥

अवनिरङ्कुरिता हरिता हिता
कृषिसमृद्धिसिता किल काश्यपी ।
प्रमुदिताः पशवो मृदुशाद्वलैर्
इत इतो विचरन्ति सयूथपाः ॥९॥

रसितमभ्रियमत्र निशम्यते
तडिदलं भयदापि च दृश्यते ।
घनतरं तिमिरं परितन्यते
विरहिणां हृदयं व्यथतेऽधुना ॥१०॥

घनघटाऽवनता रससम्भृता
निजसखीमवनिं चिरह्रापिताम् ।
झगिति वीक्ष्य विनोदनिजाश्रुभिः
शमयतीह वियोगजकश्मलम् ॥११॥

जलकणाः समवेत्य समेत्य तान्
ककुभि पिप्रति रिक्तसरोवरान् ।
शमदमा यतिनो मतयो बुधान्
विरतयो विरतानिव भूतले ॥१२॥

उपवने पथि वेश्मनि चत्वरे
तत इतश्च मुदा बहु दोलया ।
रमंत आशु जनो निजहेतवे
जनगणैः सह नेतृगणा इव ॥१३॥

युवतयो जलदागमभावितां
मधुरकण्ठरवास्तृणसङ्कुलाम् ।
कृषिमलं परिशोध्य च सश्रमं
विगणयन्ति न वृष्टिमिनातपम् ॥१४॥

जलदवर्षणतो लुलिता लता
न सुषमां स्वतनोः किल तन्वते ।
अपि तु वर्षणविन्दुचयाहताः
शिथिलिता विलपन्ति हृतश्रियः ॥१५॥

सुखमयः समयोऽद्य जलागमे
गिरिनिभैर्गगने गुरुभिर्घनैः ।
उपगृहीतरसान् सविताऽविता
क्षितितलाय ददाति हि साम्प्रतम् ॥१६॥

अरुणितैररुणेन निशामुखे
जलमुचां शकलैररुणायितम् ।
गगनमुल्लसति व्रणवन्धुरं
क्षितिदिवोः कलहे मदनातुरम् ॥१७॥

कठिनघर्मवितप्तकलेवरा
नववलाहकवारिपरिप्लुता ।
श्वसिति मुञ्चति वाष्पमिलाऽविलं
चिरशुचा कलुषेव वधूः शुचौ ॥१८॥

कुमुदिनीकुलशोभितवापिका
क्व च सरोजविभासितदीर्घिका ।
क्व सरसी जलकुम्भिकयाऽऽवृता
दधति वज्रकपद्महरिन्मणीन् ॥१९।

कुटजकेतककैरवगन्धिनं
जलदपीतविमुक्तहिमानिलम् ।
सुरभिपानकपानमिवाद्भुतं
बहु पिबन्ति जनाः पुरतः स्थिताः ॥२०॥

घनतिरोहितमभ्रदलं क्वचिद्
क्वचिदलं ·रहितं धनमालया ।
लसति कीर्णपयोदधरं नभः
शिखरिणेव वृतोऽपवृतोऽम्बुधिः ॥२१॥

हरिपदं घनलिप्तमलं घनैः
क्षितितलं सकलं जलसंवृतम् ।
नयनगौ न शशाङ्कदिवाकरौ
तिमिरजालहताः सकला दिशः ॥२२॥

विविधकङ्गुलताकणिशावली
कपिशगर्भितकोद्रवकण्डिका ।
हरितशालिगता बहुमञ्जरी
सितकचा गुरुजोनलदण्डिका ॥२३॥

उपवनं सुरभीक्रियतेऽधुना
सुमितकेतकचम्पकजातिभिः ।
उपकृतौ निरताः स्वसमृद्धिभिर्
जगति केचन सन्त्यपि दुर्दिने ॥२४॥

निशि न लोक्यत आत्मकरद्वयं
न सुषमा प्रकृतेर्न भवस्थितिः ।
प्रलयकाल इवाऽप्रलये तमस्
तिरयतीव नु दुर्दिन आत्मनि ॥२५॥

पनसपक्वफलानि दिगन्तरं
सुरभितं कुर्वन्ति लसन्ति वै ।
प्रतिरयन्ति च चम्पकपुष्पकं
निजसगन्धिसुगन्धसुवासितम् ॥२६॥

पवनधूतरसालरसाकुल-
च्युतविपक्वफलं बहुवर्णकम् ।
उपवनेषु नरा अवचिन्वते
क्षितिविकीर्णमिव स्वमकिञ्चनाः ॥२७॥

सुमधुराऽऽम्लकषायविमिश्रितं
कपिशजम्बुफलं चिनुते जनः ।
रसनया रसमाददाशु नो
गणयतीह च वर्षणवेदनाम् ॥२८॥

स्फुरति कृष्णवलाहकसंश्रिता
तडिदियं ध्वनिना सह चञ्चला ।
अभिकदुर्मनुजाङ्कगता सती
विलपतीव पलायनसरता ॥२९॥

क्वचन नृत्यति वर्हिगणो मुदा
कवरपिच्छवितानविमण्डितः ।
सरसषड्जनिनादितदिङ्मुखः
प्रकुरुते सुहृदागमसंस्तवम् ॥३०॥

जलमगाधमवाप्य घनागमे
जलचरा विचरन्ति भयं विना ।
प्रवलरक्षकदोःशरणं वरं
समुपलभ्य जनाः सुखिनो यथा ॥३१॥

प्रवलमारुतवर्षणरंहसा
भुवि पतन् पनसः प्रविकीर्णताम् ।
व्रजति संश्रयते च निरर्थतां
कृपणरक्षितकोषचयो यथा ॥३२॥

विलसदिन्द्रवधूनवशाद्वलैः
परिवृता धरणिः खचिताम्वरैः ।
अधिदिनं निशि गर्वितमानसा
परिदधाति पटं मणिमण्डितम् ॥३३॥

जलदकालमवेक्ष्य नदी समा
जलनिधिं जलदं वकपङ्क्तयः ।
युवतयो रमणं मदनार्दिताः
मधुरिपुं प्रति सुप्तिरवाप्नुते ॥३४॥

प्रवलवातवशाद् विलयं कदा
जलधरः खलु याति विखण्डशः ।
वितनुते तु विहायसि सान्द्रतां
सभिकरैरिव याति लयं चयम् ॥३५॥

क्वचन दर्दुरकर्णकटुध्वनिः
क्वचन भृङ्गमनोहरगुञ्जनम् ।
क्वचन वारिमुचां किल गर्जनम्
चरति साधुजलागममङ्गलम् ॥३६॥

हरितशाद्वलसङ्कुलिता मही
नयनगोचरमेति न पद्धतिः ।
विविधतर्कवितर्कमतावृतः
श्रुतिपथो न यथा परिलक्ष्यते ॥३७॥

विटपिनो नवपल्लवशोभिता
नर इवाभिनवोत्सवमोदिताः ।
क्षितितलं विरजो जलदोदये
भवति मत्युदये हृदयं यथा ॥३८॥

जलमुचां नवजीवनधारया
भवति सङ्कुलिता पृथिवी तृणैः ।
नहि तथापि विलोक्यत ऊषरे
क्वचन शाद्वलसस्यनवाङ्कुरः ॥३९॥

सुजनदुर्जनसङ्गवशाज्जने
सुमतिदुर्मतिसूतिरिवाम्बरे ।
अधिदिनं जलदान्निविडं तमो
ग्रहपतेर्द्युतिरैति मुहुर्मुहुः ॥४०॥

जलदकामनया वकपङ्क्तयः
प्रमुदिता रचयन्ति नभःस्रजम् ।
प्रकटयन्ति वलाहकसम्मुखं
विनयपूर्वकतोरणबन्धनम् ॥४१॥

मनुजपक्षिपशूंश्च वनस्पतीन्
घनघटैरभिषिच्य वसुन्धराम् ।
अपि विभूष्य नगाञ्झरमालया
सुखयतीह न कं जलदागमः ॥४२॥

जलपटेन कटिं परिधाप्य स्वां
कुसरितः सरितो वरनालिका ।
प्रियपतिं प्रति यान्ति विशङ्किता
नवघनागमकाममदातुराः ॥४३॥

निगमपाठपरायणवैदिका
मुखरयन्ति दिशो जलदागमे ।
प्रकृतिरावृणुते जगतीतलं
प्लवगभृङ्गपयोदनिनादनैः ॥४४॥

जलधनं भृशमाप्य सरिद्वरा
कषति कूलमलं दलति द्रुमान् ।
परिसरं विनिमज्ज्य विघूर्णते
कथय के ह्नुवते न घनागमे ॥४५॥

जगति कोऽपि न सर्वसुखावहः
प्रकृतिरेव करोति तथा तथा ।
भवति सा सुखदाऽसुखदा क्वचित्
क्वचन दीव्यति सा सफलाऽफला ॥४६॥

स्फुटति मुञ्चति बन्धन वृन्तकं
वितनुते सुरभिं चिरभट्टिका ।
निगमयत्यखिलं परिदर्श्य स्वं
त्वमपि मुञ्च सखे ! भवबन्धनम् ।।४७।।

फलति पुष्प्यति संसरति द्रुतम्
जनरुचिं विदधाति च कर्करी ।
उपदिशत्यनिशं जनतामुखे
त्वमपि मादृश एव भवेः सखे ! ।।४८।।

स्फटिकवद् विमला घनसीकरा
मलिनतां दधते भुवि पांसुभिः ।
प्रकृतिसङ्गवशादिव पूरुषा
विकृतयो व्यतिभान्ति मलैर्वृताः ।।४९।।

अधिजलं विनिमिल्य निजस्थितिं
जहति संपतिताः पृषता दिवः ।
दधति तद्गुणरूपरसान् स्वयं
हरिभिता इव जीवचया भवात् ।।५०।।

वसुकयासहिरण्यरसाश्छदैर्-
विरहिता घन ! ते नवजीवनम् ।
जगति जीवनमेधयते शठाद्
इति विबोध्य हसन्ति कदर्यताम् ।।५१।।

प्रबलशासनतन्त्रजडीकृता
सभिकलम्पटदस्युशठोद्यमाः ।
विफलतामुपयान्ति यथा तथा
कृषककार्यपथा इह वर्षणे ।।५२।।

मरकताभमयी कदली फलै-
र्नतशिरा हरते जनमानसम् ।
परिचिनोति विधैर्व्यभिचारिताम्
न हि विनश्यति कोऽपि सुताद् भवे ॥५३॥

सरसतां मृदुतामवरोहतां
स्फुरणशीतलते कदली सुखम् ।
उरुतरोरुयुगस्य मृगीदशां
मसृणतां च विजित्य विराजते ॥५४॥

विरचयन् वरकुञ्जततिं घनां
लघुदलान्वितकण्टकितो लघुः ।
अरुणवर्तुलपक्वफलावृतो
हरति पान्थमनः करमर्दकः ॥५५॥

त्यज सखे ! छदशाकनदीजले
मथितविल्वकपर्युषिताऽऽतपान् ।
उदकलोडितसक्तुभृशाशने
शयनमभ्रतले दधि दुर्दिने ॥५६॥

भज सखे ! कफवातहरं प्रियं
मधुरसां मधु मस्तु वरं जलम् ।
सुरभिवस्त्रधृते लघुभोजनं
शयनमावृतवेश्मनि दुर्दिने ॥५७॥

जनमवेक्ष्य निदाघपदाहतं
करुणयार्द्रमना हृतसन्मनाः ।
खरकरानवरुध्य विभावसो-
रुपगता जलदागमनच्छविः ॥५८॥

विशदहर्म्यतलं रुचिराशनं
तनुपटो रमणी रतदक्षिणा ।
जगति यत्र लसन्ति च तत्कृते
सुदिनतामुपगच्छति दुर्दिनम् ॥५९॥

भुवनसर्गत एव जलं पुरः
किमपि नास्त परं वदति श्रुतिः ।
इति निदर्शयते जलदोदये
सरिदपोऽत्र वितीर्य तटे लयम् ॥७०॥

विकचनीपरजोऽरुणिताऽम्बरः
सजलसौरभमन्दसदागतिः ।
जनयति प्रणयं हृदि रागिणां
नवनवं जलदागमने नृणाम् ॥६१॥

सुखयतीह नभो घनसञ्चयैर्
वसुमतीं च वनं सरितो जलैः ।
सपृषतैः पवनैर्मनुजन्मनः
समय एष विहाय वियोगिनीम् ॥६२॥

जलनिधेर्लवणाम्भ उपायतः
परिणमय्य ददाति जलं मधु ।
जलद एव सदा जनताहिते
प्रभवति क्षमता ह्युपकारिणि ॥६३॥

नवजलेन समं नवचेतनां
ददति तोयवहे समये मुदा ।
बहिरुपेत्य समेत्य युवाऽर्भका
विविधखेलमुशन्ति निजेच्छया ॥६४॥

क्वचन मल्लगणो निजकौशलं
नटगणः क्व च गानमभीप्सितम् ।
क्वचन पुत्तलिकानटनं नटी
नभसि कौतुकमिच्छति कौतुकी ॥६५॥

क्षणविनष्टतडिन्निजसम्पदं
जलधरोऽत्र विचार्य ददाति कम् ।
यदि जडे क्षमताऽस्ति वदान्यता
कुरुत किं न नराः द्रविणांहृतिम् ॥६६॥

झषकुलीरगणग्रहणे रता
वहिरुपेत्य चलन्ति च धीवराः ।
जलधरेऽप्यतिवर्षति कर्षकाः
सुदृढवप्रविनिर्मितितत्पराः ॥६७॥

अभिनवे कलिते कवितामये
प्रकृतिसच्छविवर्णनपूरिते ।
ऋतुसमुच्चयगौरवगर्विते
विरतिमेति घनागमसंस्तवः ॥६८॥

रामनारायणोऽकार्षीच्छ्रीमद्बालविहारिजः ।
प्रावृषो वर्णनं सम्यग् नवाङ्कवसुभूशके ॥

# शरद्

निगमविश्रुतनामकथाऽमला
निजविभाधवलीकृतदिङ्मुखा ।
शरदियं कलकान्तिमयी मुदा
विजयते परितो वरसम्पदा ॥१॥

सरसकोमलकान्तपदावलिं
कतिपयीं शरदङ्घ्रियुगोत्पले ।
समुपहृत्य नमामि सिताम्बरां
भगवतीं शरदं दिगलङ्कृतिम् ॥२॥

तपरजोभिरलं मलिनं मुखं
घनघनाघनसीकरधारया ।
ऋतुमतीव कृताभिषवा नवा
प्रकृतिरद्य विमृज्य विराजते ॥३॥

धवलिता धरणिः शरदागमे
कसितकाशसुमावलिभिः क्वचित् ।
पलितकेशचया गतयौवना
भजनभावरतेव सुशोभते ॥४॥

शुभमयी सुखदा विपुलाऽच्छता
शरदि राजति दिक्षु पदे पदे ।
वियति वातवलाहकयोर्वने
सरिति पल्वलवारि सरोवरे ॥५॥

हिमकणै रजसा न परिप्लुता
घनतमोहरणाद् हृदि मोददा ।
उडुगणे मिहिरे मृगलाञ्छने
शरदि राजति दिव्यमयी प्रभा ॥६॥

उपगता भिषजां जननी परा
नृपवणिग्यतियाचकपद्धतिः ।
शरदियं कृषिमातृफलप्रदा
विविधधान्यसमृद्धिविलासिता ॥७॥

शरकुशेक्षुकटाभयकाशकैः
शयितविष्णुविबोधनचामरैः ।
अनतिदूरमपोह्य घनं शरद्
घनहिमान्तः साधु विराजते ॥८॥

लसति वप्रसमुद्गतमञ्जरी
कणभराऽवनता कवरा वरा ।
पथिकमानसलोचनसौख्यदा
सततनिन्दितनन्दनवैभवा ॥९॥

धवलकैरवपुष्पवितानिता
जनमनो हरते निशि दीर्घिका ।
वितनुतेऽनुपमां सुषमां दिने
विकसिताऽरुणतामरसावलिः ॥१०॥

शरदि सस्यवृता कृषिवाटिका
कृषकलोचनसौख्यविधायिका ।
प्रसभमाददते वनसम्पदं
सुमनसां श्रियमाहरते श्रिया ॥११॥

विवसनं जघनं तटिनी स्वकं
शरदि वीक्ष्य विमृश्य नता ह्रिया ।
सरति मन्दममन्दतनूज्ज्वला
विदधती निनदं पतिमन्दिरम् ॥१२॥

कलुषितं न सुखं परिवर्धनं
सुखमयी तनुता विमला तथा ।
इति विचार्य सरित् तनुकुञ्चिता
भवति शारदकालसमागमे ॥१३॥

प्रथमपश्चिमधान्यकृषिद्वये
श्रमरताः कृषकाः . शरदागमे ।
लवनमेकत आपतितं कृषेर्
अपरतो वपनं समुपस्थितम् ॥१४॥

व्यथयते जनमर्म नवातपो
दिवसमध्यगतो विषमो भृशम् ।
रजतशाटिकया परिगुण्ठिता
प्रियतमा खलु शारदशर्वरी ॥१५॥

समुदिते गगने घटजे मुनौ
पथिषु शुष्यति कर्दमसङ्कुलम् ।
मनसि जाग्रति सौम्यगुणे यथा
व्रजति नाशमनिष्टकुभावना ॥१६॥

कसितकासविलासवती मही
जनयतीव जलागमवृद्धताम् ।
पलितकेशचयेव मनोभुवो
जरठतां नितरां जनमानसे ॥१७॥

शरदमाप्य जहाति जलं मलं
क्षितितलञ्च निजाङ्गणपङ्कताम् ।
हरिपदं जलदं हिमसंहतिं
हरिदलं विमला च रजःकणान् ॥१८॥

उडुगणारुणचन्द्रगभस्तिषु
श्रियमगस्त्यसुमे विषमच्छदे ।
दिशि विभज्य किलाम्भसि कैरवे
नभसि काशकुले शरदागता ॥१९॥

जलदवारणनिर्झरबर्हिणां
महिषभेकतडित्सरितां ध्वनिम् ।
निजकरादपवार्य शनैः शरत्
कुलवधूरिव भूतलमागता ॥२०॥

नृपवणिग्यतिभिक्षुविदेशिनां
पथिकदूतनटाह्वयाजिनाम् ।
सुखमयीं ददती शुचिपद्धतिं
भुवि विभाति शरत् करुणामयी ॥२१॥

अविगवाजसरीसृपवाजिनां
मयखराश्वतरक्षतदेहिनाम् ।
कलुषतामपहाय वदान्यतां
विदधती समतां शरदागता ॥२२॥

अरुणकञ्जकृताधिशिरोद्युतिः
प्रियकहैमसुमाकलितश्रुतिः ।
मुनिसुमग्रथितालकसंहतिः
शरदियं प्रियतासुपुमाचितिः ॥२३॥

विविधपर्वमहोत्सवसंवृता
पितृगणादिकतृप्तिविधायिका ।
उरगशायिविबोधनकारिणी
व्रतजयन्त्यनिता शरदागता ॥२४॥

गिरिसुतापचितिं कमलार्चनां
विदधती सुमसस्यफलेक्षुभिः ।
अवसरं ददती मनुजन्मने
रुचिरपूततनुः शरदागता ॥२५॥

जलघटञ्च महालयरूपिणं
सुममिदं नवरात्रमहोत्सवम् ।
धृतवती नवदीपकमालिकां
वलिवलिञ्च भुजैः शरदागता ॥२६॥

कमलिनीरमणीयदलावृते
सरसि निर्मलवारिणि भूषिते ।
जलजपुष्पितपुष्पदलासने
विलसिता शरदः कमलासना ॥२७॥

धवलसौधतले रजनीमुखे
शरदि चन्द्रसुधारससेवनम् ।
शुचि जलं सितवस्त्रविलेपने
भजति कश्चन तिक्तधृतं सिताम् ॥२८॥

त्यज दिने शयनञ्च नभस्तले
रविमरीचिपुरोमरुतौ हिमम् ।
दधि पयो मधु पर्युषितं वसाम्
अलघुभोजनमिक्षुरसं कटुम् ॥२९॥

फलनताऽऽमलकी रसपूरिता
सितकषायफलान्तरितच्छदा ।
दिशति वायुहताऽप्यहता फलं
मुनिरिवाभिनुतो न नुतो वरम् ॥३०॥

सुमनता रजनीसुरभेर्लता
विकसिता निशि सौरभधारया ।
परिसरं खलु मोदयतेऽभितो
गुणगणैरिव गुण्यजनः श्रितान् ॥३१॥

त्रिदलपुञ्जचितः खरकण्टकः
विपुलगेन्दुकतुल्यफलाञ्चितः ।
गिरिसुतागिरिशार्चनहेतवे
लसति बिल्वतरुः कमलाप्रियः ॥३२॥

दधिफलोऽपि कषायरसं फलं
फलति बिल्वसमं दिशि कुत्रचित् ।
द्विरदभुक्तकपित्थनिदर्शनं
वहति पूरयतीह रसेऽल्पताम् ॥३३॥

सितपिशङ्गमयैर्लघुभिः सुमैः
सुरभितैर्मृदुभिर्बहुभिश्चिता ।
हरितपत्रसमूहविराजिता
प्रियकरी सुवहा ददते सुखम् ॥३४॥

अपकिरन्नमृतं परितः करैः
प्रसृमरोज्ज्वलकोमलकान्तिभिः ।
सकलजीवकृते कमलं विना
मुदमुदञ्चति शारदचन्द्रमाः ॥३५॥

हिमकरेण निशा कुमुदैः सरः
वसुमती ततकाशसुमैर्वनम् ।
कुसुमितैर्विषमच्छदसञ्चयैः
सुमनयोपवनं क्रियते सितम् ॥३६॥

न हि घनो न तडिन्नहि कार्मुकं
सुरपतेर्न सिता विसकण्ठिका ।
विरहितं द्वितयेन नभस्तलं
शरदि भाति यथोपनिषत्सु खम् ॥३७॥

शरदि नाऽभ्रतलं परिलोक्यते
जलदकामनयोन्मुखबर्हिभिः ।
यदि विलोकयतीह नभोऽङ्गणं
कृषकचातकशालिझषोत्करः ॥३८॥

शरदि पुष्पविभासितकेतकी
विषमलोचनदूषणताचिता ।
वितरति स्वकलङ्कनिवृत्तये
वसुमती श्रुतिमौक्तिकभूषणम् ॥३९॥

फलभरानतशालिमहीरुहान्
कुसुमितांश्छदिनः परिनर्तयन् ।
कुमुदकञ्जजलान्यवलोडयन्
शरदि वाति सुखप्रदमारुतः ॥४०॥

इदमधोमुखनीलकटाहको
द्युजलधेरथवा विमलं तलम् ।
अमलनीलपटस्य वितानकं
शरदि वीक्ष्य नभो बहु शङ्कते ॥४१॥

शरदि मन्दतरं सरितोऽखिलाः
प्रविरहय्य समुद्धततां निजाम् ।
अभिसरन्ति यथा कुलयोषितो
विगतयौवनभारभरा प्रियम् ॥४२॥

सरिति निर्मलवारिषु लोक्यते
झषगणो विचरन्नभयोऽभितः ।
श्रुतिशिखोत्थधिया विमलायिते
मनसि सौहृदभावचयो यथा ॥४३॥

श्रमहरो निशि वाति समीरणो
मदकरीव ससौरभशीकरः ।
अचिरलब्धधनाढ्य इवोद्धतः
तपति तीक्ष्णतरं तपनो दिने ॥४४॥

जलदजालचितं मलिनाम्बरं
कुमुदबान्धवरश्मिचयाम्भसा ।
कृतवती परिशोधनमद्भुतं
सितपटोपगता शरदङ्गना ॥४५॥

कुमुदकञ्जपरागपराजितं
मधुलिहोऽनिलमाप्य समन्ततः ।
निजगतिं प्रतिधातुमनीश्वरा
उपगतापदि दुश्चरिता इव ॥४६॥

नभसि यद्यपि नो वकपङ्क्तयो
न च पयोदघटा धनुरैन्द्रकम् ।
भुवि चकास्ति तथापि नभस्तलं
प्रकृतिचारुणि नो किमपेक्षते ॥४७॥

शरदि शुष्यति निर्धनसन्निभः
पथिषु पङ्क इतस्तृणकण्डिका ।
मुनिमनःसदृशं मुदितं जलं
किरति रुक्मविभां कलमालयः ॥४८॥

हरितकीरगणोऽरुणचञ्चुभिः
कलमपक्वविपाण्डुरमञ्जरीः ।
दधदटन् दिवि लाति च जङ्गमां
सुरधनुस्त्रिगुणाम्भसिजच्छविम् ॥४९॥

स्फुटति वास्तुकशाकदलाङ्कुरो
स्वयमहैतुक एव निसर्गतः ।
वदति सर्गकरो भुवि केवलं
खलु निसर्ग इतीव न चापरः ॥५०॥

तपति भास्वति वर्षति वारिदे
हिमदिने शिशिरे कुसुमाकरे ।
समुदयं नहि याति भुवस्तलात्
शरदि केवलमेति हि वास्तुकम् ॥५१॥

अत इमं प्रिय ! हेतुमवेहि किं
प्रकृतिकालपराणुपरात्मभिः ।
यदि तवाग्रह एव सखेऽत्र तत्
कुरु समानमतिं सकलेषु वै ॥५२॥

क्षिपति मौक्तिकसन्निभशम्बरं
हरति दृष्टिमपास्यति कश्मलम् ।
कलकलध्वनिना तनुते मुद
शरदि कस्य हितो नहि निर्झरः ॥५३॥

जगति रात्रिभवं घनसम्भवं
वियति सुप्तिभवं कमले तमः ।
मिहिर आशु विभिद्य विराजते
क्वचन नास्ति रिपुर्महतोऽजितः ॥५४॥

क्व च कुविन्दगणो वयते पटान्
क्व च कुलालगणो कुरुते घटान् ।
क्व च कृषीबलसङ्घ इतस्ततो
वपति कर्षति कृन्तति सिञ्चति ॥५५॥

क्षितितले भृशकृष्टसमानिते
मृदुमृदीप्सितखाद्यसमन्विते ।
सुमनसर्षपरेणुकराजिका-
चणकशूकयवान् वपते क्षुमाम् ॥५६॥

अमलवारिसरित्सु विलोक्यते
सितपटा पृथिवी सिकतामयी ।
रजतपर्वतपृष्ठतले द्रवो
वहति शुभ्रतनुः किमु पारदः ॥५७॥

नभसि मासि पयोदघटावृतो
जलदवह्निशिखोष्मवितापितः ।
रविरयं विगते जलदे पुनः
शरदि मुञ्चति तापमतोऽधिकम् ॥५८॥

मरकतद्रवलिप्तनभोऽङ्गणं
जलदवारिविषिक्तमनोहरम् ।
क्षितितलं लसितं तृणसञ्चयै-
रिव विराजति नीलगुणास्पदम् ॥५९॥

विकसितारुणपुष्पजपावलिः
शरदुपेतमहोत्सवराधने ।
भगवतीं समुपोष्य च वाटिका-
मभिचकास्य नियोजयतीतरान् ॥६०॥

जलदवारिगतोदधिमौक्तिकं
न पतितं पयसाऽपि नभःस्थितम् ।
उडुगणत्वमवाप्य नु शोभते
निजविभाछुरिताम्बरभूतलम् ॥६१॥

पथिकयौवततापदवैद्युते
शिखिनि शान्तिमिते स्वयमम्बुदः ।
सपदि शाम्यति धूमनिभोऽधुना
वद सखेऽस्ति भवे किमहैतुकम् ॥६२॥

वपति यद्यपि बीजचयं समं
विषमता च तथापि विलोक्यते ।
भुवनसृष्टिविधावपि तादृशी
प्रकृतिसर्गनिसर्गकथेक्ष्यते ॥६३॥

चटकवृन्दसुखाय कृषीवलैर्
निजगृहेषु परोपकृतेः कृते ।
कपिशशालिकणा अवलम्बिता
गृहिण एव हि सन्ति समाश्रयाः ॥६४॥

उपगतात्ममतिर्भुवनं यथा
भुवनतत्त्वविदः खलु मायिकम् ।
अहिगणः समये निजकञ्चुकं
शरदमेत्य जहाति मलं जलम् ॥६५॥

जलजवृन्दमरन्दघटिन्धयो
मरुदमन्दगतिः प्रियमन्दरः ।
उषसि कस्य हितो नहि निर्भरः
शरदिजो भुवि शीतलताकरः ॥६६॥

प्रथमतः कपिशोऽङ्कुर एधते
तदनु नीलमयश्छदनैर्युतः ।
क्रमश एति सुमं च फलं जरां
गतिरियं जगतः किल शाश्वती ॥६७॥

विविधरङ्गमयी गुलदावली
प्रतिदिशं विकसन्त्यधिवाटिकम् ।
हरति मानवचित्तमनारतं
पिहितचित्रपटेव पतिंवरा ॥६८॥

प्रकटताललयं खगवारकं
कलमगोपवधूनवगीतकम् ।
पशुगणस्य मनो द्रुतमाक्षिपत्
प्रचुरसस्यरसस्य जिघत्सतः ॥६९॥

प्रचलिता वकपङ्क्तिरुपागता
सरसि सारसपङ्क्तिरिषोर्जयोः ।
सरसतां नयते निजकूजनैः
सरसिजोपनिबद्धमधुव्रतान् ॥७०॥

शरदि वीक्ष्य विभां नलिनीपतेर्
हिमकरोऽपि तथैव विभासते ।
जगति मित्रसमृद्धिमवेक्ष्य के
नहि मिषन्ति विहाय मुनीश्वरान् ॥७१॥

मुनिजना इव शक्तकृषीवलाः
शरदि जाग्रति कर्मणि सर्वदा ।
श्रमरता दधते नहि मन्दतां
सफलताऽऽप्तिवशात्क्वचनाल्पशः ॥७२॥

तव शरद् ! महिमा विमलोऽमितो
नहि जनोऽयमुदीरितुमीश्वरः ।
यतितवांश्च तथापि यथाबलं
भव ततो मयि देवि ! कृपावती ॥७३॥

व्रजविहारिणं नत्वा पितृव्यं च रमेश्वरम् ।
रामनारायणेनेयं वर्णिता शरदश्छटा ॥७४॥

## हिमागमः

व्यथयते भुवनं हिमराशिभिर्
युवसुमादि समेधयते च यः ।
प्रणत एष नमस्यति तं हिमं
मृदुलया पदगुम्फितमालया ॥१॥

अपगतः समयः शरदो यतस्
तत इतोऽपि हिमः समुपागतः ।
अपहरन् शरदातपवैभवं
गगनकुङ्कुमकञ्जदिशां द्युतिम् ॥२॥

मदनपार्श्वचरः प्रमदाप्रियो
हिमवहो हिमदोऽपि हिमः स्वयम् ।
हिमकरोज्ज्वलकान्त्यपहारको
विजयतेऽभित एष हिमागमः ॥३॥

नयनमेति यतः ककुभां मुखे
हरितताविनिमग्नधरा ततः ।
प्रकृतिजां क्षमते हरितां श्रियं
न हरिदश्वकरोऽपि विलोडितुम् ॥४॥

दिनमुखे प्रकृती रजनीमुखे
प्रियसखीव सखीं करपीडने ।
अनुपमामलमौक्तिकमालया
भुवमलङ्कुरुते परितोऽखिलाम् ॥५॥

इत इतोऽवसरः शरदोऽमलो
लसति यत्र जितारुणचन्द्रिका ।
दलितसूर्यनिशाकरवैभवो
नटति सम्प्रति भीमहिमागमः ॥६॥

घनतुषारनिपातमलीमसा
शिशिरवातचपेटविकम्पिता ।
स्वयमसावसिता तमसावृता
भवति भीतिकरी हिमशर्वरी ॥७॥

हिमकणावनता शतपर्विका
मरकतं फलतीव विभासते ।
नहि चरन्ति च तां पशवो भ्रमाद्
हिमकणान् क्व लिहन्ति विमोहिताः ॥८॥

निजचये कृषका अवितुं कृषिं
प्रतिकृतिं प्रतिरोप्य सुखं गताः ।
पशुगणो न कृषिं किल नुर्भ्रमात्
स्पृशति रज्जुमहेः पुरुषो यथा ॥९॥

दिवसमध्यगतोऽपि रविः सुखं
वितनुते तुहिनागमकालिकः ।
सलिलमत्र तनोति भयं यतो
जन इदं न वगाहितुमीहते ॥१०॥

जलखगोऽपि च जाड्यभयाद्धिमे
नहि विगाहत एव कमीक्षते ।
प्रघन आपतिते न यथा भिया
बलयुतोऽपि नरो भुवि कातरः ॥११॥

कुसुमहीनमहीरुहपङ्क्तयः
तुहिनजालनतास्तमसावृताः ।
नयनयोः पथि यान्ति हतश्रियो
विनिहता विपदा मनुजा इव ॥१२॥

प्रिय ! विराजति यस्य गृहेऽधुना
सुगृहिणः सुभगा प्रमदा प्रिया ।
कठिनपीवरसंहतसक्थिनी
वद करिष्यति तस्य हिमो नु किम् ? ॥१३॥

कथय यस्य समीरनियन्त्रिता
वरगृहाश्च गृहा अचलान्तरे ।
अधिगृहं च गृहा विलसन्ति तं
तुहिनशीतलता किमु बाधते ? ॥१४॥

भुवि यदा परितः फलहीनता
विटपिगुल्मलतासु विलोक्यते ।
फलवती कदली निरबन्ध्यतां
नयति दीनदशां तुहिने तदा ॥१५॥

हिमहतां नलिनीं च निजश्रियं
परिसरेषु विलोक्य जलाशयैः ।
अतिशयव्यथया मिहिरोदये
सघनवाष्पततिः परिहीयते ॥१६॥

हिमनिपातनिपीडितशर्वरी
निजसखीमुषसं प्रति दुःखिता ।
वदति नापि तु केवलमात्मनो
नयनतोऽश्रुकणानवमुञ्चति ।।१७।।

उपचितेषु हिमेषु सहोदिने
व्रजति तिग्मकरोऽपि च मन्दताम् ।
अरिगणे प्रबले सति शक्तिमान्
भजति कालवशादसमर्थताम् ।।१८।।

करयुगं चरणद्वयमङ्गुली—
नतितरां व्यथयन्नचिंतिं सृजन् ।
किरति वातरुजं श्वसनश्चलञ्
चिदचितोर्भयदः खलु हैमनः ।।१९।।

तरलमम्बु भवे जडतां नयन्
शुचिखरातपमङ्घ्रितले क्षिपन् ।
शिथिलयञ् शिखिनो ज्वलितां शिखां
चरति हैमनकालधरापतिः ।।२०।।

श्रमत एव भवेऽखिलमाप्यते
नियम एष सखे! किल शाश्वतः ।
परमहोऽश्रमलभ्यमिदं द्वयं
श्रमकणापचयोऽम्बु च शीतलम् ।।२१।।

व्रजति यद्यपि शीतलतां हिमे
निखिलवस्तु, तथापि वराङ्गनाः ।
दधति कूपजलं वट उष्णतां
भवति चित्रमयी प्रकृतेः कृतिः ।।२२।।

मम रिपोः सवितुर्भुवि पद्मिनी
प्रणयिनीति हिमस्त्वरयाऽदहत् ।
रविरवेक्ष्य न किञ्चिदपाकरोत्
समय एव नियन्त्रयिताऽखिलम् ॥२३॥

दधि घनं मधुरं मधुरेक्षवो
मधुरसर्षपशाकमयत्नतः ।
हिमदिने कृषकाय मिलन्त्यलं
प्रकृतिरेव सदा कुरुते हितम् ॥२४॥

सहसि चापि सहस्यदिने हिमे
गृहमुखे कृषका रजनीमुखे ।
ज्वलितवह्निशिखां परितः स्थिता
न गणयन्ति कथां किल सांसदीम् ॥२५॥

अवनताः कणिशैः कनकप्रभैर्
नयनसौख्यकरैर् नवशालयः ।
विदधते जनवैभववर्धनं
गुणगणैर्विनता इव योषितः ॥२६॥

कपिशवर्णमयी कणसम्भृता
लगुडकाण्डगजोनलमञ्जरी ।
जनपदार्तिनिवारणकारिणी
हिमदिने ध्वजिनीव विराजते ॥२७॥

गलिततेजसि भास्वति यामिनी
दिवसनीतनिमेषचयं हठात् ।
स्ववदने विनिवेश्य पृथूदरी
भवति कामिमुदे किल हैमनी ॥२८॥

हिमदिनं निशया बहु पीडितं
व्रजति कार्श्यमिव प्रमदाजितः ।
भुवि तथापि समर्पयते सुखं
भृतिमतां च कृतेऽलसकर्मिणाम् ॥२९॥

मुकुलिता न लतास्तरवो यदा
हिमभयात् कुसुमौषधयोऽखिलाः ।
विकसिताश्च तदा सितसर्षपा
विविधगेन्दुकलोध्रसतीनकाः ॥३०॥

जगति लुम्बति यद्यपि कर्णयोर्
नयननासिकयोर्विवरे विशन् ।
स्पृशति नाऽपि हिमो न निरीक्षते
मदनभीतिवशान् मदनालयम् ॥३१॥

प्रकृतिजातनिजोरसिजोष्णतां
युवतयश्चरितार्थयितुं हिमे ।
सुपरिरम्भरुचिं दयितं मुदा
द्रुतमुपेत्य भजन्ति तदात्मताम् ॥३२॥

अपहरन् सकलेन्द्रियचापलं
गगनगः श्रितदक्षिणदिङ्मुखः ।
अधिहिमं हिममाकलयंस्तनौ
रविरुपैति मुनेः समतां पराम् ॥३३॥

वहति दुःसहशीतसदागतौ
हिम ऋतावतिशैत्यभिया स्मरः ।
निविशतेऽशरणो युवमर्मकृद्
विरहिणीहृदये ज्वलितानने ॥३४॥

तुहिनसीकरसञ्चयसङ्कुले
मरुति वाति विधूतकरा वधूः ।
पतिमुखं वलते कृतसीत्कृता
सुरतलालसया मदनातुरा ॥३५॥

अकुसुमं नलिनं रहितं श्रिया
त्यजति पुष्पलिहामवलिर्द्रुतम् ।
उपकृतिं विहितां विपदागमे
स्मरति सज्जन एव न दुर्जनः ॥३६॥

हिमहते कमले मधुलापुका
मधुलिहोऽपि दिगन्तरमाश्रिताः ।
पतति वृत्तिभयेऽभिमुखं तदा
कथय के प्रवसन्ति न भूतले ॥३७॥

विविधवृक्षलतासुमसंहतिः
कुसुमगन्धविहीनरुचिर्हिमे ।
क्वचन भाति तदा लवली सुमैः
प्रकृतिरस्ति सदैव सुदुस्त्यजा ॥३८॥

अधिकशैत्यविभीषिकया हिमे
लसति मारुतवेगजवेष्टनैः ।
उपवने लतया मिलितस्तरुर्
युवतिबाहुवृतो पुरुषो यथा ॥३९॥

छुरयति स्वसुगन्धितमारुतैः
क्वचन पुष्पचिता महिलाह्वया ।
प्रतिदिशं कुसुमैः रहिता लताः
परकृते भुवि सज्जनभूतयः ॥४०॥

अभिमतो हिमतो हि हिमालयो
नगपतिर्मुकुटो वरपावनः ।
क्षितिधरः सरितां प्रभवः परस्
तव हिमागम ! एष समादरः ॥४१॥

रविकरच्छुरिता हिमसीकराः
सरसि वाष्पकणाश्च हिमे प्रगे ।
कनकमौक्तिकमिश्रितरुग्व्रजं
प्रकटयन्ति हरन्ति मनो नृणाम् ॥४२॥

करमुखाधरपादविपादिका—
स्फुटनभीतिवशाच्छ्र्यते जनः ।
मसृणलेपघनं कवचं हितं
हिमजचर्मरुजारिनिवारकम् ॥४३॥

दिनमणिर्हिमसङ्घनिपीडितः
स्वपिति निक्षु यतः प्रियया सुखम् ।
पुनरुदेतुमरं नहि चेष्टते
तत इमा विपुला हिमरात्रयः ॥४४॥

सुजनकोप इव द्रुतनश्वरो
दुरितमार्गभवो विभवो यथा
अवगमो मदिराश्रयिणां यथा ।
झटिति लुम्पति हैमदिनं तथा ॥४५॥

कृपणलोभलतेव विवर्धिनी
चिरदरिद्रहृदामिव लालसा ।
विषयिणामिव वैषयिकी रुचिर्
विरमतीह निशा नहि हैमनी ॥४६॥

तुहिनविन्दुचयान् परितः किरन्
तरलयन् मुखभालशिरःश्रुतीः ।
हरितसस्यदलानि विलोलयञ्
चलति शीतलहैमनमारुतः ॥४७॥

कपिगणः क्व पलाशिषु वेपते
श्वगण उज्झति नो क्व च चुल्हिकाम् ।
मलिनतां श्रयतेऽजगवादिकं
कुचति कायमतीव दरिद्रितः ॥४८॥

यवदलेषु लसद्हिमविन्दवः
श्रियमपास्य वरां मणिमौक्तिकीम् ।
कृषकपान्थजनस्य मनो हठाद्
इतरतस्तु हरन्ति निजश्रिया ॥४९॥

गदति मार्गममुं समयं हरिर्
मधुरमात्मतनुं रसपूरितम् ।
वद तथापि रुचेरपरा कथा
प्रियतमोऽस्त्यत एव स योषिताम् ॥५०॥

प्रथममास इहास्ति य आब्दिकः
कथय शीततनुर्न भवेत् स किम् ।
जलत एव ससर्ज विभुः पुरा
सकलभूतमयं जगतीतलम् ॥५१॥

चलचितां नियमः, कलहः स्त्रियाः
स्वपतिना सह, वारवधूरतिः ।
भुवि यथा द्रुतमेति तिरस्तथा
त्वरितमेति तिरो हिमवासरः ॥५२॥

जलकणाकुलितं नयनद्वयं
शिथिलपादयुगं करमेजितम् ।
सममिदं वहता पथिचारिणा
हुतभुजोऽर्चिषमाप्य निपीयते ।।५३।।

उपरताः कृषकाश्च वहंलिहा
युगनिरीशलवित्रहलादितः ।
अधिकृताखिलकार्यसमापकाः
सुखमटन्ति स्वपन्ति नरा इव ।।५४।।

कृषिषु सेचनकर्मणि कर्षका
अधिदिनं निशि सायमुषःक्षणे ।
विनिरता गणयन्ति न शीतजां
रुजमहोऽस्ति रुजा क्व च कर्मिणाम् ।।५५।।

श्रुतिविलेऽङ्गुलिमंसतले जनो
लगुडमास्यविले जनगीतकम् ।
समवधृत्य करे गुडधानिका
व्रजति कच्छतले तृणहेतवे ।।५६।।

सकलसंवसथार्भकबालिकाश्
चणकवास्तुकसर्षपराजिकाः ।
परिसरे पुरत्रप्रगणेऽभितो
दधति चेतुममत्रमलङ्कृतम् ।।५७।।

जनगणो निशि धावति पावकं
कुतुकमस्ति मनाङ् नहि साम्प्रतम् ।
हिमभिया मिहिरोऽपि निषेवते
हिमदिनेऽनलकोणमतन्द्रितः ।।५८।।

शितसतीनकसर्षपकृष्णिका
बहुविधैः कुसुमैश्चणकाः क्षुमाः ।
प्रतिदिशं वसुधामपचिन्वते
भजति को नु मुदा जननीं निजाम् ॥५९॥

मृदु नवं चणकच्छदनं हितं
सलवणं क्व च चर्वति बालकः ।
विहरति प्रति वप्रगणं हिमे
शकलमैक्षवमाप्य विचूषति ॥६०॥

अनलसंस्कृतकन्दचयं करे
समुपनीय कृषीबलवालकाः ।
क्षितितले विहरन्ति यतस्ततो
नहि हिमं गणयन्ति मनागपि ॥६१॥

प्रकृतिजच्छटयाच्छुरितं नवं
द्रुतविलम्बितवृत्तसमन्वितम् ।
विविधकल्पनया परिकल्पितं
विरतिमेति हिमागमवर्णनम् ॥६२॥

शाण्डिल्यान्वयजातोऽहं रामनारायणो द्विजः ।
हेमन्तर्तुस्तवं सम्यक् कृतवान् मनसो मुदे ॥

———

## शिशिरः

जनक ! काल ! मदीयशिरोऽञ्जलिश्
चरणयोस्तव यातु निरन्तरम् ।
शिशिरमाकलितं कलयाऽत्र ते
नवपदैर्विवृणोम्यहमञ्जसा ॥१॥

निजहिमेन विमर्द्य तरुश्रियं
सकलजीवचयं परिकम्पयन् ।
वसुमतीं वसुना परिभूषयञ्
शिशिर एष सखे ! समुपागतः ॥२॥

प्रिय ! विलोकय काल उपागतः
शिशिर एष विपर्ययकारणम् ।
सुखमयो ज्वलनो भयदं जलं
रविकराः सुखदा न तु चन्द्रिका ॥३॥

हरति यो नितरां श्रमिणां श्रमं
वपति जीवनतत्त्वमकुण्ठितम् ।
लगति बाणसमः शिशिरेऽधुना
शिखिसखो मनुजावयवेषु सः ॥४॥

हिमनगे हिमपातमयी कथा
क्वचन मेघनिपातघनव्यथा ।
वहति शीतलतालहरी क्वचिच्
शिशिर आतनुते भुवि कुण्ठनम् ॥५॥

घनतुषारनिपाततमोवशाद्
अहनि सूर्यविभा न विलोक्यते ।
अभिनिवेशवशे मनुजे यथा
नयपथो न मनागनुभूयते ॥६॥

कृषिधरासु सुवर्णमयीं प्रभां
समवकीर्य सुपुष्पितसर्षपाः ।
'वमति भूमिरियं कनकावलिं'
सफलयन्ति जनोक्तिमिमां पराम् ॥७॥

शिशिरशीतलतावशवर्तिनाम्
अवयवेषु मनःसु च मन्दता ।
विशति गायति नृत्यति मोदते
निजपदं समवाप्य महत्तरम् ॥८॥

क्षुधितदुर्बलनिर्वसनान् नरान्
अतितरां कफकासनिपीडितान् ।
लघुशिशून् जरठान् पवनार्तिभिः
प्रमथितान् शिशिरः खलु बाधते ॥९॥

बहुविधाकृतिरङ्गसुधारसैः
सुरभिसंवृतपक्वफलैर्भृशम् ।
उपवने ग्रथिता लघवोऽमृताः
प्रददते शिशिरेऽपि रसालताम् ॥१०॥

अगणितच्छदराजिभिरावृता
फलनता विटपैर्विशदाऽसिता ।
विदधती वसतिं निजकोटरे
विहगवृन्दकृते तरुतिन्तडी ॥११॥

निजसमुन्नतभालतिरस्कृताऽ-
परमहीरुहसङ्घसमुन्नतिः ।
तरुततिं विफलां शिशिराहतां
नयति तालतरुः करुणां दशाम् ॥१२॥

प्रचुरकण्टककण्टकिता स्वयं
रुचिरचिक्कणकोटिधरैः फलैः ।
अपिहितच्छदना वदरीक्ष्यते
पिशुनवत् खरबीजधरा सती ॥१३॥

धृतजलापि दिवा निशि वापिका
शिशिरशीतलताविकलीकृता ।
अपचयावयवोषसि बाष्पिता
किमुत जीवकुले शिशिरव्यथा ॥१४॥

शिशिरमेत्य दिने दिवसाधिपे
जनरुचिः प्रवला दहनोर्णयोः ।
अरुचिरस्ति सखे ! शशिनः करे
मलयजे निशि शीतजले हिमे ॥१५॥

अनृजुपीतफलव्रजकैतवाद्
अपरबालविधून् विरचय्य वै ।
दलमिषात् सुतरां हरितध्वजं
वितनुते कदली विपिनश्रियम् ॥१६॥

बुसपलालपटाशनदुर्गतौ
हरति दीनजने दयनीयताम् ।
रसभरेक्षुसुयष्टिरनेकधा
समिदभावविनाशकरी तथा ॥१७॥

छदनमस्ति कुटीरहितेऽरसं
हरितुपत्रचयः पशुहेतवे ।
मधुरसो मनुजाय मनःप्रियः
खलिरपीन्धनमाशु नृणां कृते ॥१८॥

हरितसस्ययुता कृषिवाटिका
भुवनजीवनपालनतत्परा ।
पथिककर्षकचञ्चलमानसं
स्ववशमानयते निजसम्पदा ॥१९॥

कृषिवनं फलपुष्पसमन्वितं
करकवर्षणमातुपति क्वचित् ।
मलिनतां कुरुते हरति श्रियं
द्विडभियानदशां क्षिपति द्रुतम् ॥२०॥

शिशिरयत्यनिशं निखिलं वपुः
क्षुदिव कुञ्चति वातरुजानिभः ।
अलसतां तनुते कषति श्रियं
शिशिर एष महाकलुषप्रदः ॥२१॥

शिशिरशीतकथां कृषकोऽधुना
न विगणय्य रसालनिपीडने ।
गुडसितादिकृतौ रमतेऽभितः
समयपातितकष्टनिवृत्तये ॥२२॥

ऋतुरयं शिशिरः कुरुतेऽस्य किं
भवति यस्य वरे शयने वरा ।
सुरतकेलिकलाचतुराऽङ्गना
पृथुनितम्बकुचोरुकचाचिता ॥२३॥

हुतवहोऽथ विनिर्मितमूर्णया
वसनमञ्चिततूलमथो घनम् ।
पवनशीतनियन्त्रितमन्दिरं
भवति यत्र च नो शिशिरव्यथा ॥२४॥

धनिनि भोगसमृद्धिसमेधिते
विरहिते रुजया बलदर्पिते ।
सुखमसौख्यमकिञ्चनतार्दिते
किरति भेददृशा शिशिरो जडः ॥२५॥

मुकुलयन् नयने बहु शूलयञ्
श्रुतियुगं दशनानतिपीडयन् ।
सततमोष्ठयुगं परिकम्पयन्
सरति दारुणशैशिरमारुतः ॥२६॥

ऋतुरयं शिशिरः शिशिरात्मकः
शशति सर्वमखर्वमदोद्धतः ।
परमहोऽक्षम आत्मभुवो भिया
कठिनवामकुचोष्मविपाटने ॥२७॥

प्रतिगृहं शिशिरे जरठाः स्त्रियो
ज्वलनपूर्णहसन्तिकया हिमम् ।
निरसितुं शिशुभिः सह सङ्गताः
प्रणिगदन्ति मिथो विविधां कथाम् ॥२८॥

शिशिरगर्वमपास्यति राङ्कवं
प्रणयिनीकुचमण्डलजोष्णता ।
निहिततूलपटाऽऽविककम्बले
तृणकरीषसमिज्ज्वलितोऽनलः ॥२९॥

कतिरसालसुमावलिसञ्चितस्
तनुहिमस्तनुपुष्पितसेन्दुकः ।
सुरभिदूतहिमान्तविबोधको
मदनबन्धुरयं शिशिरः स्थितः ॥३०॥

विकसिताऽखिलपल्लवपेशला
सुरभिगन्धवृता लवली लता ।
शिशिरगौरवगानपरायणा
गिरमुदीरयतीव मधुव्रतैः ॥३१॥

हसति कुञ्जलता कुसुमैः सिता
क्व तुहिनं क्व च वक्ति शिलीमुखान् ।
स्पृशत मा मधुपा ! नहि वोऽर्हता
न चरितं नहि रूपमनाविलम् ॥३२॥

दिवसमेधयता हरता हिमं
वितरतोत्तरवासिषु दीधितिम् ।
तरणिना प्रचुरं ददता सुखं
शिशिरमेत्य कुबेरदिगाश्रिता ॥३३॥

धनिकवैभवलास्यपदाहतं
प्रतिहतं दयिताकुचजोष्मणा ।
मुनिजनाऽनलहेतिभिरर्दितं
वसति शीतमकिञ्चनमन्दिरे ॥३४॥

अधिगृहं नहि यस्य विराजते
घृतपयस्तिलतैलविपाचितम् ।
अशनमुष्णतरं न च तूलिका
विशति तस्य गृहे किल शीतता ॥३५॥

तपसि शीतभयाद् भुवमागता
विधृतकुन्दलता भृशतारकाः ।
निजरुचोपवनं सह तारकैर्
नभ इवारचयन्ति भुवस्तले ॥३६॥

क्व च परीत्य निजार्भकसंवहैर्
अधिपलालमकिञ्चनमानवाः ।
निशमपेतसुखा व्यतियन्त्यलं
शिशिरभीषणशीतलतार्दिताम् ॥३७॥

क्व धनिनो मदिराऽऽमिषसुन्दरी—
फलरसाण्डरसायनसेविताः ।
अपनयन्ति निशां शिशिरे सुखं
धनभयाज्जडताऽपि पलायते ॥३८॥

तृणकरीषपलालकृशानुना
कतिपयं समयं रजनीमुखे ।
सुखमतीत्य निविश्य पुनः क्वचित्
सुरगृहे निशमावहतेऽध्वनः ॥३९॥

दरमटन् सुरधामनि निर्जने
तत इतो विनदद्रदसीत्कृतः ।
निशमतीत्य रवेः किरणोदयं
श्रयति दैवमुपालभतेऽध्वनः ॥४०॥

क्व शरणं भुवि कायिककुञ्चनं
क्वचन चत्वरगोष्ठहसन्तिका ।
क्व च विशीर्णपुरातनकन्थिका
भवति सम्प्रति निर्धनताजुषाम् ॥४१॥

शिशिरजाड्यतिरोहितिहेतवे
मनुजतामवलम्ब्य धनाधिपाः ।
ददति दीनजनाय पटाशने
निजधनं गमयन्ति च धर्मताम् ॥४२॥

शिशिरतामपनेतुमरुन्तुदां
तिलखलिं कृसरं गुडपिण्डिकाम् ।
लशुननागरहिङ्गुयवानिका
भज च फाणितवज्रकरोटिके ॥४३॥

क्व च लवङ्गलता ललिताऽधुना
निजनिसर्गसमानदिनोदयम् ।
समुपलभ्य वितीर्य नवश्रियं
हसति शीतकृशामपरां लताम् ॥४४॥

हरितिमाऽनुपमः सुखदर्शनः
कृषिधरामवतीर्य विलक्षणः ।
शिशिरमां वितनोति चतुर्दिशं
स्पृशति नोषरशालि धरातलम् ॥४५॥

शिरसि कर्णविले धर सार्षपं
करतलेऽङ्घ्रितले च विशेषतः ।
वपुषि मर्दय तिष्ठ रवेर्मुखे
त्यज भयं हिमशीतचयोदितम् ॥४६॥

वृतिचये वितता मधुयष्टिका
छदिगृहे पटले बहुतुम्बिका ।
फलति सम्प्रति शाकततिर्भृशं
हरति तेमनसूपदरिद्रताम् ॥४७॥

शिशिरताऽपि च सम्प्रति बाधते
बलधनोज्झितमानवपञ्जरम् ।
विधिनियन्त्रितशासनयोग्यता
प्रभवतीह यथा खलु दुर्बले ॥४८॥

क्षितितलं कठिनं हिमराशिभिर्
विदधता शिशिरेण विरच्यते ।
ऋतुपतिं भजितुं पयसि स्थले
कुसुमपल्लवकोरकभूमिका ॥४९॥

नदति वारिधरे शिशिरे जनः
कृषिहितोत्कमना घनमीक्षते ।
नृप इवाद्यतनः परमम्बुदः
प्रदिशते करकान् न पयांस्यहो ॥५०॥

घनदलाञ्चितवृक्षतले विशन्
निकृतशीतभयोऽनुडुहां गणः ।
अवहितः कृतचर्वितचर्वणः
सुखमुपेत्य विजृम्भति सत्वरम् ॥५१॥

निशि चकोरगणः शशिनः करान्
प्रियतरान्न मनागपि सेवते ।
किमुत ते शिशिरे जनताहितं
वितरितुं प्रभवन्ति विधोः कराः ॥५२॥

क्व च कलायलता हरिमन्थका:
फलकदम्बचिताश्च लताढकी ।
रुचिरनीलसुमावनतक्षुमा
दिशि दिशि प्रकिरन्ति मनोज्ञताम् ॥५३॥

समयलब्धकलायफलं नवं
मधुरसालरसं यवमञ्जरीम् ।
सरलमाश्य च संवसथे जनो
हसति नागरजीवनवैभवम् ॥५४॥

दिनकरोऽपि निभालयति स्वकां
दिवसमध्यगत: प्रकृतिं पराम् ।
विपदि संपदि वाऽभ्युदये क्षये
प्रकृतिरस्ति सदा भुवि दुस्त्यजा ॥५५॥

प्रशमनश्च तृष: क्षुध एधक:
प्रखरघर्महरस्तुहिनप्रद: ।
अलसताप्रणयी पठनप्रिय:
शुचिविपक्षरत: शिशिरो मत: ॥५६॥

सुरदिनोन्मुखकालकलाकलो
दिनकरोत्तरमार्गविधायक: ।
विविधपर्वमहोत्सवसंभृत:
शिशिर ! ते समयोऽस्ति शुभप्रद: ॥५७॥

मिसिमुकुन्दवितुन्नकहिङ्गुली-
लशुनगृञ्जनमूलकदार्विका: ।
उपगृहं बहुशो गृहमेधिनां
परिलसन्ति नवालुकमेथिका: ॥५८॥

भृशजनित्वसमृद्धिमहर्घता-
सदुपयोगदृशा हरिताऽऽभया ।
कृषिमनल्पश्रिया शिशिरेऽपरां
मिषति शाककृषिः प्रतिवेशिनीम् ॥५६॥

मनुत एष निजं बलदं कृषेः
परमिमां ग्लपयति हिमपातनात् ।
वदति किञ्च करोति यदृच्छया
जगति साम्प्रतिकी जनता यथा ॥६०॥

मरुबकावलिमोदजनिप्रदो
जलदकाल इवैष ऋतुः प्रभुः ।
प्रिय इवाऽऽवृतरक्तसुखाऽञ्चितो
शिशिर आतनुते नटनं वरम् ॥६१॥

नवनवं नवनीतनिभं मृदु
प्रतनु सवसथीयकथानकम् ।
शिशिरवर्णनमेति समापनं
शरकृशानुनभोऽक्षिमितेऽब्दके ॥६२॥

सत्कर्मनिरतं शान्तं सम्भूतं विद्वदन्वये ।
आद्यं विद्यागुरुं नत्वा कुलदीपं द्विवेदिनम् ॥
ऋतूनां वर्णनं चारु ग्राममाहात्म्यमण्डितम् ।
रामनारायणेनेदं कृतं प्राज्ञमुदे बुधा ॥

———

## श्लोकानुक्रमणी

## हिन्दीभाषायां कतिपयशब्दानामर्थनिरूपणम्

| पृ० | प० | शब्द | अर्थ |
|---|---|---|---|
| १० | ४ | आढकी | अरहर |
| १० | ७ | कलाय | मटर |
| १० | २२ | सस्यनिकेतन | खेत |
| १४ | १५ | वप्र | खेत |
| १५ | २ | सुमेषु | कामदेव |
| १५ | ५ | रजनी | हल्दी |
| १५ | १५ | अपचिति | पूजा |
| १६ | १४ | राजिका | राई |
| १७ | १६ | कृतमाल | अमिलतास |
| १७ | १७ | नग | वृक्ष |
| १७ | १७ | चलदल | पीपल |
| १७ | १९ | लाङ्गली | नारियल |
| १८ | २ | सहचरी | पीले फूल वाले पियावास |
| १८ | ३ | मरुवकी | दौना |
| १८ | ७ | माधवी | वासन्ती लता |
| १८ | १० | चमरिका | कचनार |
| १८ | १८ | कुरवक | कोराटी |
| १९ | १५ | वनप्रिय | कोयल |
| १९ | १८ | हिमतमी | जाड़े की रात |
| १९ | १८ | परिणाह | मोटापन |
| २६ | १८ | दन्तशठ | नींबू |
| २७ | १६ | शम्बर | जल |

| | | | |
|---|---|---|---|
| २८ | ४ | जन्तुफल | गूलर |
| २९ | २३ | गजाशन | पीपल |
| २९ | २४ | कनकदुग्ध | गूलर |
| २९ | २४ | मधुद्रुम | महुआ |
| ३० | २० | अजगन्ध | पुदीना |
| ३२ | ३ | यजनद्रुम | चीड़ |
| ३२ | १२ | उपनिष्कर | राजमार्ग |
| ३३ | २४ | शुचि | आषाढ |
| ३५ | ५ | असुप्रद | प्राणप्रद |
| ३६ | १८ | काश्यपी | पृथिवी |
| ३६ | २१ | अभ्रिय | मेघगर्जन |
| ३८ | ७ | इला | पृथिवी |
| ३८ | २१ | हरिपद | आकाश |
| ३९ | ४ | जोनल | जुन्हरी |
| ४० | ३ | अभिक | कामी पुरुष |
| ४३ | २ | चिरभट्रिका | ककड़ी |
| ४३ | १७ | वसुक | मदार |
| ४६ | १७ | मास | मवासा |
| ४३ | १७ | हिरण्यरस | भड़भाड़ |
| ४४ | १२ | करमर्दक | करौंदा |
| ४६ | ४ | नभस् | श्रावण |
| ५० | १० | विषमच्छेद | छितवन |
| ५१ | २ | प्रियक | कदम्ब |
| ५१ | ३ | मुनिसुम | अगस्त्य का फूल |
| ५२ | १७ | दधिफल | कैथा |
| ५२ | २४ | सुवहा | शेफालिका |
| ५३ | ८ | सुमना | मालती |
| ६२ | ३ | प्रघन | युद्ध . |
| ६३ | ५ | सहस् | अगहन मास |
| ६४ | ९ | सहस्य | पौष |
| ६५ | २१ | सदागति | वायु |
| ६६ | २२ | महिलाह्वया | प्रियङ्गु लता |

| | | | |
|---|---|---|---|
| ६९ | ५ | वहंलिह | वैल |
| ६९ | ६ | युग | जुअठा |
| ६९ | ६ | लवित्र | हसिया |
| ६९ | ६ | निरीश | हल का एक भाग |
| ६९ | २० | अमत्र | वरतन |
| ७० | १ | सतीनक | मटर |
| ७० | १ | कृष्णिका | छोटे दाने का मटर |
| ७२ | २३ | अमृत | अमरूद |
| ७३ | ४ | तिन्तडी | इमली |
| ७४ | २२ | रसाल | गन्ना |
| ७८ | २ | हसन्तिका | अँगीठी |
| ७८ | ११ | नागर | सोठ |
| ७८ | ११ | यवानिका | अजवाईन |
| ७८ | १२ | फाणित | राव |
| ७८ | १२ | वज्रक | वाजरा |
| ७९ | १ | मधुयष्टिका | मुलेठी |
| ७९ | ४ | तेमन | तेवना |
| ८० | १ | हरिमन्थक | चना |
| ८० | २१ | मिसि | सौंफ |
| ८० | २१ | वितुन्नक | धनिया |
| ८० | २१ | हिङ्गुली | वैंगन |
| ८० | २ | दार्विका | गोभी |

## शुद्धिपत्रम्

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १ | १० | आचायः | आचार्यैः |
| २ | १८ | शराद्धिमाः | शरद्धिमाः |
| ३ | २४ | द्वावृत् | द्वावृतू |
| ४ | ४ | द्वावृत् | द्वावृतू |
| ५ | १६ | वसन्तस्य | वसन्तस्य |
| ६ | ९ | वर्ततेः | वर्तते |
| ७ | २४ | स्वतन्त्रता | स्वतन्त्राः |
| ८ | १५ | दिनाङ्क | दिनाङ्कः |
| ९ | १ | वसन्तः | वसन्तः |
| ९ | २ | जगतीतल | जगतीतलं |
| ९ | १३ | कतिपयैः | कतिपदैः |
| ११ | ९ | सन्तति | शन्तति |
| १५ | २४ | मर्हाधियुत | मर्हाधियुतं |
| १६ | १५ | जलान् | जनान् |
| १७ | ६ | कञ्चन् | कञ्चन |
| १८ | १० | विधाय | पिधाय |
| १९ | १३ | जगतं | जगत् |
| २० | ३ | ह्रिय | ह्लिय |
| २१ | ६ | ह्रियम् | ह्लियम् |
| २४ | २३ | सुखमय | सुखमयं |
| २५ | १९ | वर्हति | वहति |
| २६ | १६ | यथऽगदम् | यथाऽगदम् |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| २८ | १ | अकुसुमौऽपि | अकुसुमोऽपि |
| २८ | १६ | शरण | शरणं |
| २९ | १० | विरसपत्नगण: | विरसपत्नगण: |
| ३१ | ५ | प्रचुरधर्म– | प्रचुरघर्म- |
| ३१ | १७ | विवृतारस: | विवृतोरस: |
| ३२ | ९ | प्रखरधर्म- | प्रखरघर्म- |
| ३३ | २२ | वनग्निनमा | वनमग्निना |
| ३४ | ६ | तपे: | तपे |
| ३४ | ८ | द्रुतम् | द्रुमम् |
| ३४ | १५ | श्रयन्न् | श्रयन् |
| ३६ | ११ | सत्त्वर | सत्त्वरं |
| ४१ | २२ | दुमति | दुर्मति |
| ४३ | १ | वन्धन वृन्तकं | वन्धनवृन्तकं |
| ४४ | ३ | विधैर् | विधेर् |
| ४६ | ६ | विचार्य | विचार्य |
| ४६ | ११ | वर्पति | वर्षति |
| ४६ | ११ | कर्षका: | कर्षका: |
| ४८ | १६ | घनहिमान्त: साधु | घनहिमान्तरितोऽब्र |
| ६३ | ७ | शक्तिमान | शक्तिमान् |
| ७९ | ३ | भृश | भृशं |
| ८० | १५ | प्रिय | प्रिय: |